# सूचीपत्रम् ॥



अथ

# गद्यपद्यसंग्रहोनाम बालपाठः

## तृतीयो भागः

## भट्ट ब्यूलरेण प्रणीतः

पंडितोपाव्हेन परशुरामसूनुना विष्णुशास्त्रिणाआङ्गलभाषया

विरचितया

तदन्तर्गतकठिनशब्दमालाया व्याख्यया

समन्वितश्च.

स च

मुम्बापुरीवर्त्तिराजकीयग्रन्थशालाधिकारिणा प्रकाशितः

---

शकाब्दाः १८१०. खिस्ताब्दाः १८८८.

---

मुल्यम् रूपकार्धम्.

# TABLE OF CONTENTS.

# ॥ अथ नलोपाख्यानम् ॥

॥ बृहदश्व उवाच ॥

आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥ १ ॥
अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा ।
उपर्युपरि सर्वेषामादित्य इव तेजसा ॥ २ ॥
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ॥ ३ ॥
ईप्सितो नरनारीणामुदारः संयतेन्द्रियः ।
रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम् ॥ ४ ॥
तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।
शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ॥ ५ ॥
स प्रजार्थे परं यत्नमकरोत्सुसमाहितः ।
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ॥ ६ ॥
तं स भीमः प्रजाकामस्तोषयामास धर्मवित् ।
महिष्या सह राजेन्द्र सत्कारेण सुवर्चसम् ॥ ७ ॥

तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ।
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ॥ ८ ॥
दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् ।
उपपन्नान्गुणैः सर्वैर्भीमान्भीमपराक्रमान् ॥ ९ ॥
दमयन्ती तु रूपेण तेजसा यशसा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥ १० ॥
अथ तां वयसि प्राप्ते दासीनां समलंकृतम् ।
शतं शतं सखीनां च पर्युपासच्छचीमिव ॥ ११ ॥
तत्र स्म राजते भैमी सर्वाभरणभूषिता ।
सखीमध्येनवद्याङ्गी विद्युत्सौदामनी यथा ॥ १२ ॥
न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ।
मानुषेष्वपि चान्येषु दृष्टपूर्वाथवा श्रुता ॥ १३ ॥
नलश्च नरशार्दूलो लोकेष्वप्रतिमो भुवि ।
कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ १४ ॥
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात् ।
नैषधस्य समीपे तु दमयन्तीं पुनःपुनः ॥ १५ ॥
तयोरदृष्टकामोभूच्छृण्वतोः सततं गुणान् ।
अन्योन्यं प्रति कौन्तेय स व्यवर्धत हृच्छयः ॥ १६ ॥
अशक्नुवन्नलः कामं तदा धारयितुं हृदा ।
अन्तःपुरसमीपस्थे वन आस्ते रहोगतः ॥ १७ ॥

स ददर्श ततो हंसाञ्जातरूपपरिष्कृतान् ।
वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥ १८ ॥
ततोन्तरिक्षगो वाचं व्याजहार नलं तदा ।
हन्तव्योस्मि न ते राजन्करिष्यामि तव प्रियम् ॥ १९ ॥
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध ।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥ २० ॥
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः ।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः ॥ २१ ॥
विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके ।
निपेतुस्ते गरुत्मन्तः सा ददर्श च तान्गणान् ॥ २२ ॥
सा तानद्भुतरूपान्वै दृष्ट्वा सखीगणावृता ।
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे ॥ २३ ॥
अथ हंसा विससृपुः सर्वतः प्रमदावने ।
एकैकशस्तदा कन्यास्तान्हंसान्समुपाद्रवन् ॥ २४ ॥
दमयन्ती तु यं हंसं समुपाधावदन्तिके ।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥ २५ ॥
दमयन्ति नलो नाम निषधेषु महीपतिः ।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः ॥ २६ ॥
तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि ।
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ॥ २७ ॥

वयं हि देवगन्धर्वमानुषोरगराक्षसान् ।
दृष्टवन्तो न चास्माभिर्दृष्टपूर्वस्तथाविधः ॥ २८ ॥
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।
विशिष्टाया विशिष्टेन संगमो गुणवान्भवेत् ॥ २९ ॥
एवमुक्ता तु हंसेन दमयन्ती विशांपते ।
अब्रवीत्तत्र तं हंसं त्वमप्येवं नले वद ॥ ३० ॥
तथेत्युक्त्वाण्डजः कन्यां विदर्भस्य विशांपते ।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥ ३१ ॥

॥ इति नलोपाख्याने प्रथमोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत ।
ततः प्रभृति न स्वस्था नलं प्रति बभूव सा ॥ १ ॥
ततश्चिन्तापरा दीना विवर्णवदना कृशा ।
बभूव दमयन्ती तु निःश्वासपरमा तदा ॥ २ ॥
ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना ।
पाण्डुवर्णा क्षणेनाथ हृच्छयाविष्टचेतना ॥ ३ ॥
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित् ।
न नक्तं न दिवा शेते हाहेति रुदती पुनः ॥ ४ ॥

ततो विदर्भपतये दमयन्त्याः सखीजनः ।
न्यवेदयत्तामस्वस्थां दमयन्तीं नरेश्वरे ॥ ५ ॥
तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीसखीगणात् ।
चिन्तयामास तत्कार्यं सुमहत्स्वां सुतां प्रति ॥ ६ ॥
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मनः कार्यं दमयन्त्याः स्वयंवरम् ॥ ७ ॥
स संनिमन्त्रयामास महीपालान्विशांपतिः ।
अनुभूयतामयं वीराः स्वयंवर इति प्रभो ॥ ८ ॥
श्रुत्वा तु पार्थिवाः सर्वे दमयन्त्याः स्वयंवरम् ।
अभिजग्मुस्ततो भीमं राजानो भीमशासनात् ॥ ९ ॥
हस्त्यश्वरथघोषेण पूरयन्तो वसुंधराम् ।
विचित्रमाल्याभरणैर्बलैर्दृश्यैः स्वलंकृतैः ॥ १० ॥
तेषां भीमो महाबाहुः पार्थिवानां महात्मनाम् ।
यथार्हमकरोत्पूजां तेवसंस्तत्र पूजिताः ॥ ११ ॥
एतस्मिन्नेव काले तु सुराणामृषिसत्तमौ ।
अटमानौ महात्मानाविन्द्रलोकमितो गतौ ॥ १२ ॥
नारदः पर्वतश्चैव महाप्राज्ञौ महाव्रतौ ।
देवराजस्य भवनं विविशाते सुपूजितौ ॥ १३ ॥
तावर्चयित्वा मघवा ततः कुशलमव्ययम् ।
पप्रच्छानामयं चापि तयोः सर्वगतं विभुः ॥ १४ ॥

## ॥ नारद उवाच ॥

आवयोः कुशलं देव सर्वत्र गतमीश्वर ।
लोके च मघवन्कृत्स्ने नृपाः कुशलिनो विभो ॥ १५ ॥

## ॥ बृहदश्व उवाच ॥

नारदस्य वचः श्रुत्वा पप्रच्छ बलवृत्रहा ।
धर्मज्ञाः पृथिवीपालास्त्यक्तजीवितयोधिनः ॥ १६ ॥
शस्त्रेण निधनं काले ये गच्छन्त्यपराङ्मुखाः ।
अयं लोकोक्षयस्तेषां यथैव मम कामधुक् ॥ १७ ॥
क नु ते क्षत्रियाः शूरा न हि पश्यामि तानहम् ।
आगच्छतो महीपालान्दयितानातिथीन्मम ॥ १८ ॥
एवमुक्तस्तु शक्रेण नारदः प्रत्यभाषत ।
शृणु मे मघवन्येन न दृश्यन्ते महीक्षितः ॥ १९ ॥
विदर्भराज्ञो दुहिता दमयन्तीति विश्रुता ।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥ २० ॥
तस्याः स्वयंवरः शक्र भविता नचिरादिव ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २१ ॥
तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः ।
काङ्क्षन्तिस्म विशेषेण बलवृत्रनिषूदन ॥ २२ ॥

एतस्मिन्कथ्यमाने तु लोकपालाश्च साग्निकाः ।
आजग्मुर्देवराजस्य समीपममरोत्तमाः ॥ २३ ॥
ततस्ते शुश्रुवुः सर्वे नारदस्य वचो महत् ।
श्रुत्वैव चाब्रुवन्हृष्टा गच्छामो वयमप्युत ॥ २४ ॥
ततः सर्वे महाराज सगणाः सहवाहनाः ।
विदर्भानभिजग्मुस्ते यतः सर्वे महीक्षितः ॥ २५ ॥
नलोपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम् ।
अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः ॥ २६ ॥
अथ देवाः पथि नलं ददृशुर्भूतले स्थितम् ।
साक्षादिव स्थितं मूर्त्या मन्मथं रूपसंपदा ॥ २७ ॥
तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविम् ।
तस्थुर्विगतसंकल्पा विस्मिता रूपसंपदा ॥ २८ ॥
ततोन्तरिक्षे विष्टभ्य विमानानि दिवौकसः ।
अब्रुवन्नैषधं राजन्नवतीर्य नभस्तलात् ॥ २९ ॥
भोभो नैषध राजेन्द्र नल सत्यव्रतो भवान् ।
अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम ॥ ३० ॥

॥ इति नलोपाख्याने द्वितीयोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत ।
अथैतान्परिपप्रच्छ कृताञ्जलिरुपस्थितः ॥ १ ॥
के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः ।
किं च तद्वो मया कार्यं कथयध्वं यथातथम् ॥ २ ॥
एवमुक्ते नैषधेन मघवानभ्यभाषत ।
अमरान्वै निबोधास्मान्दमयन्त्यर्थमागतान् ॥ ३ ॥
अहमिन्द्रोयमग्निश्च तथैवायमपांपतिः ।
शरीरान्तकरो नृणां यमोयमपि पार्थिव ॥ ४ ॥
त्वं वै समागतानस्मान्दमयन्त्यै निवेदय ।
लोकपाला महेन्द्राद्याः समायान्ति दिदृक्षवः ॥ ५ ॥
प्राप्तुमिच्छन्ति देवास्त्वां शक्रोग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतित्वे वरयस्व ह ॥ ६ ॥
एवमुक्तः स शक्रेण नलः प्राञ्जलिरब्रवीत् ।
एकार्थं समुपेतं मां न प्रेषयितुमर्हथ ॥ ७ ॥
कथं नु जातसंकल्पः स्त्रियमुत्सहते पुमान् ।
परार्थमीदृशं वक्तुं तत्क्षमन्तु महेश्वराः ॥ ८ ॥

## ॥ देवा ऊचुः ॥

करिष्य इति संश्रुत्य पूर्वमस्मासु नैषध ।
न करिष्यसि कस्मात्त्वं व्रज नैषध माचिरम् ॥ ९ ॥

## ॥ बृहदश्व उवाच ॥

एवमुक्तः स देवैस्तैर्नैषधः पुनरब्रवीत् ।
सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे ॥ १० ॥
प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत ।
जगाम स तथेत्युक्त्वा दमयन्त्या निवेशनम् ॥ ११ ॥
ददर्श तत्र वैदर्भीं सखीगणसमावृताम् ।
देदीप्यमानां वपुषा श्रिया च वरवर्णिनीम् ॥ १२ ॥
अतीव सुकुमाराङ्गीं तनुमध्यां सुलोचनाम् ।
आक्षिपन्तीमिव प्रभां शशिनः स्वेन तेजसा ॥ १३ ॥
तस्य दृष्ट्वैव ववृधे कामस्तां चारुहासिनीम् ।
सत्यं चिकीर्षमाणस्तु धारयामास त्द्दच्छयम् ॥ १४ ॥
ततस्ता नैषधं दृष्ट्वा संभ्रान्ताः परमाङ्गनाः ।
आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः ॥ १५ ॥
प्रशशंसुश्च सुप्रीता नलं ता विस्मयान्विताः ।
न चैनमभ्यभाषन्त मनोभिस्त्वभ्यपूजयन् ॥ १६ ॥
अहो रूपमहो कान्तिरहो धैर्यं महात्मनः ।
कोयं देवोथवा यक्षो गन्धर्वो वा भविष्यति ॥ १७ ॥
न तास्तं शक्नुवन्तिस्म व्याहर्तुमपि किंचन ।
तेजसा धर्षितास्तस्य लज्जावत्यो वराङ्गनाः ॥ १८ ॥

अथैनं स्मयमानं तु स्मितपूर्वाभिभाषिणी ।
दमयन्ती नलं वीरमभ्यभाषत विस्मिता ॥ १९ ॥
कस्त्वं सर्वानवद्याङ्ग मम हृच्छयवर्धन ।
प्राप्तोस्यमरवद्वीर ज्ञातुमिच्छामि तेनघ ॥ २० ॥
कथमागमनं चेह कथं चासि न लक्षितः ।
सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः ॥ २१ ॥
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
नलं मां विद्धि कल्याणि देवदूतमिहागतम् ॥ २२ ॥
देवास्त्वां प्राप्तुमिच्छन्ति शक्रोग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतिं वरय शोभने ॥ २३ ॥
तेषामेव प्रभावेन प्रविष्टोहमलक्षितः ।
प्रविशन्तं न मां कश्चिदपश्यन्नाप्यवारयत् ॥ २४ ॥
एतदर्थमहं भद्रे प्रेषितः सुरसत्तमैः ।
एतच्छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि ॥ २५ ॥

॥ इति नलोपाख्याने तृतीयोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत् ।
प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते ॥ १ ॥

अहं चैव हि यच्चान्यन्ममास्ति वस्तु किंचन ।
तत्सर्वं तव विश्रब्धं कुरु प्रणयमीश्वर ॥ २ ॥
हंसानां वचनं यत्तु तन्मां दहति पार्थिव ।
त्वत्कृते हि मया वीर राजानः संनिपातिताः ॥ ३ ॥
यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद ।
विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ॥ ४ ॥
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ॥ ५ ॥
येषामहं लोककृतामीश्वराणां महात्मनाम् ।
न पादरजसा तुल्यो मनस्ते तेषु वर्तताम् ॥ ६ ॥
विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति ।
त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान् ॥ ७ ॥
विरजांसि च वासांसि दिव्याश्चित्राः स्रजस्तथा ।
भूषणानि च मुख्यानि देवान्प्राप्य तु भुङ्क्ष्व वै ॥ ८
य इमां पृथिवीं कृत्स्नां संक्षिप्य ग्रसते पुनः ।
हुताशमीशं देवानां का तं न वरयेत्पतिम् ॥ ९ ॥
यस्य दण्डभयात्सर्वे भूतग्रामाः समागताः ।
धर्ममेवानुरुध्यन्ति का तं न वरयेत्पतिम् ॥ १० ॥
धर्मात्मानं महात्मानं दैत्यदानवमर्दनम् ।
महेन्द्रं सर्वदेवानां का तं न वरयेत्पतिम् ॥ ११ ।

क्रियतामविशङ्केन मनसा यदि मन्यसे ।
वरुणं लोकपालानां सुहृद्वाक्यमिदं शृणु ॥ १२ ॥
नैषधेनैवमुक्ता सा दमयन्ती वचोब्रवीत् ।
समाप्लुताभ्यां नेत्राभ्यां शोकजेनाथ वारिणा ॥१३ ॥
देवेभ्योहं नमस्कृत्य सर्वेभ्यः पृथिवीपते ।
वृणे त्वामेव भर्तारं सत्यमेतद्ब्रवीमि ते ॥ १४ ॥
तामुवाच ततो राजा वेपमानां कृताञ्जलिम् ।
दौत्येनागत्य कल्याणि कथं स्वार्थमिहोत्सहे ॥ १५ ॥
कथं ह्यहं प्रतिश्रुत्य देवतानां विशेषतः ।
परार्थे यत्नमारभ्य कथं स्वार्थमिहोत्सहे ॥ १६ ॥
एष धर्मो यदि स्वार्थो ममापि भविता ततः ।
एवं स्वार्थं करिष्यामि तथा भद्रे विधीयताम् ॥ १७ ॥
ततो बाष्पाकुलां वाचं दमयन्ती शुचिस्मिता ।
प्रत्याहरन्ती शनकैर्नलं राजानमब्रवीत् ॥ १८ ॥
उपायोयं मया दृष्टो निरपायो नरेश्वर ।
येन दोषो न भविता तव राजन्कथंचन ॥ १९ ॥
त्वं चैव हि नरश्रेष्ठ देवाश्चेन्द्रपुरोगमाः ।
आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः ॥ २० ॥
ततोहं लोकपालानां संनिधौ त्वां नरेश्वर ।
वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ॥ २१ ॥

एवमुक्तस्तु वैदर्भ्या नलो राजा विशांपते ।
आजगाम पुनस्तत्र यत्र देवाः समागताः ॥ २२ ॥
तमपश्यंस्तथायान्तं लोकपाला महेश्वराः ।
दृष्ट्वा चैनं ततोऽपृच्छन्वृत्तान्तं सर्वमेव तम् ॥ २३ ॥
कच्चिद्दृष्टा त्वया राजन्दमयन्ती शुचिस्मिता ।
किमब्रवीच्च नः सर्वान्वद भूमिपतेनघ ॥ २४ ॥

## ॥ नल उवाच ॥

भवद्भिरहमादिष्टो दमयन्त्या निवेशनम् ।
प्रविष्टः सुमहाकक्षं दण्डिभिः स्थविरैर्वृतम् ॥ २५ ॥
प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः ॥
ऋते तां पार्थिवसुतां भवतामेव तेजसा ॥ २६ ॥
सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः ।
विस्मिताश्चाभवन्सर्वा दृष्ट्वा मां विबुधेश्वराः ॥ २७ ॥
वर्ण्यमानेषु च मया भवत्सु रुचिरानना ।
मामेव गतसंकल्पा वृणीते सा सुरोत्तमाः ॥ २८ ॥
अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः ।
त्वया सह नरव्याघ्र मम यत्र स्वयंवरः ॥ २९ ॥
तेषामहं संनिधौ त्वां वरयिष्यामि नैषध ।
एवं तव महाबाहो दोषो न भवितेति ह ॥ ३० ॥

एतावदेव विबुधा यथावृत्तमुदाहृतम् ।
मया शेषे प्रमाणं तु भवन्तस्त्रिदशेश्वराः ॥ ३१ ॥

॥ इति नलोपाख्याने चतुर्थोऽध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा ।
आजुहाव महीपालान्भीमो राजा स्वयंवरे ॥ १ ॥
तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः ।
त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः ॥ २ ॥
कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते नृपा रङ्गं महासिंहा इवाचलम् ॥ ३ ॥
तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः ।
सुरभिस्रग्धराः सर्वे प्रमृष्टमणिकुण्डलाः ॥ ४ ॥
तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः ।
आकारवन्तः सुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः ॥ ५ ॥
सुकेशान्तानि चारूणि सुनासाक्षिभ्रुवाणि च ।
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ॥ ६ ॥

दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
मुष्णन्ती प्रभया राज्ञां चक्षुंषि च मनांसि च ॥ ७ ॥
तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्रतत्रैव सक्ताभून्न चचाल च पश्यताम् ॥ ८ ॥
ततः संकीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनथ ॥ ९ ॥
तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन्स्थितान् ।
संदेहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ॥ १० ॥
यंयं हि ददृशे तेषां तंतं मेने नलं नृपम् ।
सा चिन्तयन्ती बुद्ध्याथ तर्कयामास भाविनी ॥ ११ ॥
कथं हि देवाञ्जानीयां कथं विद्यां नलं नृपम् ।
एवं संचिन्तयन्ती सा वैदर्भी भृशदुःखिता ॥ १२ ॥
श्रुतानि देवलिङ्गानि तर्कयामास भारत ।
देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे ॥ १३ ॥
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये ।
सा विनिश्चित्य बहुधा विचार्य च पुनःपुनः ॥ १४ ॥
शरणं प्रति देवानां प्राप्तकालममन्यत ।
वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ॥ १५ ॥
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् ।
हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ॥ १६ ॥

पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ।
वचसा मनसा चैव यथा नाभिचराम्यहम् ॥ १७ ॥
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे ।
यथा देवैः स मे भर्ता विहितो निषधाधिपः ॥ १८ ॥
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ।
यथेदं व्रतमारब्धं नलस्याराधने मया ॥ १९ ॥
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ।
स्वं चैव रूपं कुर्वन्तु लोकपाला महेश्वराः ॥ २० ॥
यथाहमभिजानीयां पुण्यश्लोकं नराधिपम् ।
निशम्य दमयन्त्यास्तत्करुणं परिदेवितम् ॥ २१ ॥
यथोक्तं चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे ।
सापश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् ॥ २२ ॥
हृषितस्त्रग्रजोहीनान्स्थितानस्पृशतः क्षितिम् ।
छायाद्वितीयो म्लानस्त्रग्रजःस्वेदसमन्वितः ॥ २३ ॥
भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः ।
सा समीक्ष्य तु तान्देवान्पुण्यश्लोकं च भारत ॥ २४ ॥
नैषधं वरयामास भैमी धर्मेण पाण्डव ।
विलज्जमाना वस्त्रान्ते जग्राहायतलोचना ॥ २५ ॥
स्कन्धदेशेसृजत्तस्य स्त्रजं परमशोभनाम् ।
वरयामास चैवैनं पतित्वे वरवर्णिनी ॥ २६ ॥

ततो हाहेति सहसा मुक्तः शब्दो नराधिपैः ।
देवैर्महर्षिभिस्तत्र साधुसाध्विति भारत ॥ २७ ॥
विस्मितैरीरितः शब्दः प्रशंसद्भिर्नलं नृपम् ।
दमयन्तीं तु कौरव्य वीरसेनसुतो नृपः ॥ २८ ॥
आश्वासयद्वरारोहां प्रहृष्टेनान्तरात्मना ।
यत्त्वं भजसि कल्याणि पुमांसं देवसंनिधौ ॥ २९ ॥
तस्मान्मां विद्धि भर्तारमेवं ते वचने रतम् ।
यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते ॥ ३० ॥
तावत्त्वयि भविष्यामि सत्यमेतद्ब्रवीमि ते ।
दमयन्तीं तथा वाग्भिरभिनन्द्य कृताञ्जलिः ॥ ३१ ॥
तौ परस्परतः प्रीतौ दृष्ट्वा त्वग्निपुरोगमान् ।
तानेव शरणं देवाञ्जग्मतुर्मनसा तदा ॥ ३२ ॥
वृते तु नैषधे भैम्या लोकपाला महौजसः ।
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः ॥ ३३ ॥
प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम् ।
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः ॥ ३४ ॥
अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः ।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ॥ ३५ ॥
यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम् ।
अपांपतिरपां भावं यत्र वाञ्छति नैषधः ॥ ३६ ॥

स्रजश्चोत्तमगन्धाढ्याः सर्वे च मिथुनं ददुः ।
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ॥ ३७ ॥
पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः ।
दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतम् ॥ ३८ ॥
गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः ।
विवाहं कारयामास दमयन्त्या नलस्य च ॥ ३९ ॥
उष्य तत्र यथाकामं नैषधो द्विपदां वरः ।
भीमेन समनुज्ञातो जगाम नगरं स्वकम् ॥ ४० ॥
अतीव मुदितो राजा भ्राजमानोंशुमानिव ।
अरञ्जयत्प्रजा वीरो धर्मेण परिपालयन् ॥ ४१ ॥
ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः ।
अन्यैश्च बहुभिर्धीमान्क्रतुभिश्चाप्तदक्षिणैः ॥ ४२ ॥
पुनश्च रमणीयेषु वनेषूपवनेषु च ।
दमयन्त्या सह नलो विजहारामरोपमः ॥ ४३ ॥
जनयामास च नलो दमयन्त्यां महामनाः ।
इन्द्रसेनं सुतं चापि इन्द्रसेनां च कन्यकाम् ॥ ४४ ॥
एवं स यजमानश्च विहरंश्च नराधिपः ।
ररक्ष वसुसंपूर्णां वसुधां वसुधाधिपः ॥ ४५ ॥

॥ इति नलोपाख्याने पञ्चमोध्यायः ॥

## ॥ बृहदश्व उवाच ॥

वृते तु नैषधे भैम्या लोकपाला महौजसः ।
यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥ १ ॥
अथाब्रवीत्कलिं शक्रः संप्रेक्ष्य बलवृत्रहा ।
द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि ॥ २ ॥
ततोब्रवीत्कलिः शक्रं दमयन्त्याः स्वयंवरम् ।
गत्वा हि वरयिष्ये तां मनो हि मम तां गतम् ॥ ३ ॥
तमब्रवीत्प्रहस्येन्द्रो निवृत्तः स स्वयंवरः ।
वृतस्तया नलो राजा पतिरस्मत्समीपतः ॥ ४ ॥
एवमुक्तस्तु शक्रेण कलिः क्रोधसमन्वितः ।
देवानामन्त्र्य तान्सर्वानुवाचेदं वचस्तदा ॥ ५ ॥
देवानां मानुषं मध्ये यत्सा पतिमविन्दत ।
तत्र तस्या भवेन्न्याय्यं विपुलं दण्डधारणम् ॥ ६ ॥
एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः ।
अस्माभिः समनुज्ञाते दमयन्त्या नलो वृतः ॥ ७ ॥
का च सर्वगुणोपेतं नाश्रयेत नलं नृपम् ।
यो वेदधर्मानखिलान्यथावच्चरितव्रतः ॥ ८ ॥
योधीते चतुरो वेदान्सर्वानाख्यानपञ्चमान्
नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्मतः ॥ ९ ॥

यस्मिन्दाक्ष्यं धृतिर्दानं तपः शौचं दमः शमः ।
ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे ॥ १० ॥
एवंरूपं नलं यो वै कामयेच्छपितुं कले ।
आत्मानं स शपेन्मूढो हन्यादात्मानमात्मना ॥ ११ ॥
एवंगुणं नलं यो वै कामयेच्छपितुं कले ।
कृच्छ्रे स नरके मज्जेदगाधे विपुले ह्रदे ॥ १२ ॥
ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ।
संहर्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर ॥ १३ ॥
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते ।
त्वमप्यक्षान्समाविश्य साहाय्यं कर्तुमर्हसि ॥ १४ ॥

॥ इति नलोपाख्याने षष्ठोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

एवं स समयं कृत्वा द्वापरेण कलिः सह ।
आजगाम ततस्तत्र यत्र राजा स नैषधः ॥ १ ॥
स नित्यमन्तरप्रेप्सुर्निषधेष्ववसच्चिरम् ।
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ॥ २ ॥
कृत्वा मूत्रमुपस्पृश्य संध्यामास्तेस्म नैषधः ।
अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ॥ ३ ॥

स समाविश्य च नलं समीपं पुष्करस्य च ।
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥ ४ ॥
अक्षद्यूते नलं जेता भवान्हि सहितो मया ।
निषधान्प्रतिपद्यस्व जित्वा राज्यं नलं नृपम् ॥ ५ ॥
एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ।
कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्यगात् ॥ ६ ॥
आसाद्य तु नलं वीरं पुष्करः परवीरहा ।
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः ॥ ७ ॥
न चक्षमे ततो राजा समाह्वानं महामनाः ।
वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत ॥ ८ ॥
तमक्षमदसंमत्तं सुहृदां न तु कश्चन ।
निवारणेभवच्छक्तो दीव्यमानमरिंदमम् ॥ ९ ॥
ततः पौरजनाः सर्वे मन्त्रिभिः सह भारत ।
राजानं द्रष्टुमागच्छन्निवारयितुमातुरम् ॥ १० ॥
ततः सूत उपागम्य दमयन्त्यै न्यवेदयत् ।
एष पौरजनो देवि द्वारि तिष्ठति कार्यवान् ॥ ११ ॥
निवेद्यतां नैषधाय सर्वाः प्रकृतयः स्थिताः ।
अमृष्यमाणा व्यसनं राज्ञो धर्मार्थदर्शिनः ॥ १२ ॥
ततः सा बाष्पकलया वाचा दुःखेन कर्षिता ।
उवाच नैषधं भैमी शोकोपहतचेतना ॥ १३ ॥

राजन्पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः ।
मन्त्रिभिः सहितः सर्वै राजभक्तिपुरस्कृतः ॥ १४ ॥
तां तथा रुचिरापाङ्गीं विलपन्तीं तथाविधम् ।
आविष्टः कलिना राजा नाभ्यभाषत किंचन ॥ १५ ॥
ततस्ते मन्त्रिणः सर्वे ते चैव पुरवासिनः ।
नायमस्तीति दुःखार्ता व्रीडिता जग्मुरालयान् ॥ १६ ॥
तदा तदभवद्द्यूतं पुष्करस्य नलस्य च ।
युधिष्ठिर बहून्मासान्पुण्यश्लोकस्त्वजीयत ॥ १७ ॥

॥ इति नलोपाख्याने सप्तमोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

दमयन्ती ततो दृष्ट्वा पुण्यश्लोकं नराधिपम् ।
उन्मत्तवदनुन्मत्ता देवने गतचेतसम् ॥ १ ॥
भयशोकसमाविष्टा राजन्भीमसुता ततः ।
चिन्तयामास तत्कार्यं सुमहत्पार्थिवं प्रति ॥ २ ॥
सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियम् ।
नलं च हृतसर्वस्वमुपलभ्येदमब्रवीत् ॥ ३ ॥
बृहत्सेनामतियशां तां धात्रीं परिचारिकाम् ।
हितां सर्वार्थकुशलामनुरक्तां सुभाषिताम् ॥ ४ ॥

बृहत्सेने व्रजामात्यानानाय्य नलशासनात् ।
आचक्ष्व यद्धृतं द्रव्यमवशिष्टं च यद्वसु ॥ ५ ॥
ततस्ते मन्त्रिणः सर्वे विज्ञाय नलशासनम् ।
अपि नो भागधेयं स्यादित्युक्त्वा नलमाव्रजन् ॥ ६ ॥
तास्तु सर्वाः प्रकृतयो द्वितीयं समुपस्थिताः ।
न्यवेदयद्भीमसुता न स तत्प्रत्यनन्दत ॥ ७ ॥
वाक्यमप्रतिनन्दन्तं भर्तारमभिवीक्ष्य सा ।
दमयन्ती पुनर्वेश्म व्रीडिता प्रविवेश ह ॥ ८ ॥
निशम्य सततं चाक्षान्पुण्यश्लोकपराङ्मुखान् ।
नलं च हृतसर्वस्वं धात्रीं पुनरुवाच ह ॥ ९ ॥
बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात् ।
सूतमानय कल्याणि महत्कार्यमुपस्थितम् ॥ १० ॥
बृहत्सेना तु तच्छ्रुत्वा दमयन्त्याः प्रभाषितम् ।
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः ॥ ११ ॥
वार्ष्णेयं तु ततो भैमी सान्त्वयच्छ्लक्ष्णया गिरा ।
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता ॥ १२ ॥
जानीषे त्वं यथा राजा सम्यग्वृत्तः सदा त्वयि ।
तस्य त्वं विषमस्थस्य साहाय्यं कर्तुमर्हसि ॥ १३ ॥
यथायथा हि नृपतिः पुष्करेणैव जीयते ।
तथातथास्य वै द्यूते भूयो रागोभिवर्धते ॥ १४ ॥

यथा च पुष्करस्याक्षाः पतन्ति वशवर्तिनः ।
तथा विपर्ययश्चापि नलस्याक्षेषु दृश्यते ॥ १५ ॥
सुहृत्स्वजनवाक्यानि यथावन्न शृणोति च ।
ममापि च तथा वाक्यं नाभिनन्दति मोहितः ॥ १६ ॥
नूनं मन्ये न दोषोऽस्ति नैषधस्य महात्मनः ।
यत्र मे वचनं राजा नाभिनन्दति मोहितः ॥ १७ ॥
शरणं त्वां प्रपन्नास्मि सारथे कुरु मद्वचः ।
न हि मे शुद्ध्यते भावः कदाचिद्विनशेदपि ॥ १८ ॥
नलस्य दयितानश्वान्योजयित्वा मनोजवान् ।
इदमारोप्य मिथुनं कुण्डिनं यातुमर्हसि ॥ १९ ॥
मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनं तथा ।
अश्वांश्चेमान्यथाकामं वस वान्यत्र गच्छ वा ॥ २० ॥
दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नलसारथिः ।
न्यवेदयदशेषेण नलामात्येषु मुख्यशः ॥ २१ ॥
तैः समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते ।
ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना ॥ २२ ॥
हयांस्तत्र विनिक्षिप्य सूतो रथवरं च तम् ।
इन्द्रसेनां च तां कन्यामिन्द्रसेनं च बालकम् ॥ २३ ॥
आमन्त्र्य भीमं राजानमार्त्तः शोचन्नलं नृपम् ।
अटमानस्ततोऽयोध्यां जगाम नगरीं तदा ॥ २४ ॥

ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः ।
भृतिं चोपययौ तस्य सारथ्येन महीपतेः ॥ २९ ॥

॥ इति नलोपाख्यानेष्टमोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः ।
पुष्करेण हृतं राज्यं यच्चान्यद्वसु किंचन ॥ १ ॥
हृतराज्यं नलं राजन्प्रहसन्पुष्करोब्रवीत् ।
द्यूतं प्रवर्ततां भूयः प्रतिपाणोस्ति कस्तव ॥ २ ॥
शिष्टा ते दमयन्त्येका सर्वमन्यज्जितं मया ।
दमयन्त्याः पणः साधु वर्ततां यदि मन्यसे ॥ ३ ॥
पुष्करेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना ।
व्यदीर्यतेव हृदयं न चैनं किंचिदब्रवीत् ॥ ४ ॥
ततः पुष्करमालोक्य नलः परममन्युमान् ।
उत्सृज्य सर्वगात्रेभ्यो भूषणानि महायशाः ॥ ५॥
एकवासा ह्यसंवीतः सुहृच्छोकविवर्धनः ।
निश्चक्राम ततो राजा त्यक्त्वा सुविपुलां श्रियम् ॥ ६ ॥
दमयन्त्येकवस्त्राथ गच्छन्तं पृष्ठतोन्वगात् ।
स तया बाह्यतः सार्धं त्रिरात्रं नैषधोवसत् ॥ ७ ॥

पुष्करस्तु महाराज घोषयामास वै पुरे ।
नले यः सम्यगातिष्ठेत्स गच्छेद्वध्यतां मम ॥ ८ ॥
पुष्करस्य तु वाक्येन तस्य विद्वेषणेन च ।
पौरा न तस्य सत्कारं कृतवन्तो युधिष्ठिर ॥ ९ ॥
स तथा नगराभ्याशे सत्कारार्हो न सत्कृतः ।
त्रिरात्रमुषितो राजा जलमात्रेण वर्तयन् ॥ १० ॥
पीड्यमानः क्षुधा तत्र फलमूलानि कर्षयन् ।
प्रातिष्ठत ततो राजा दमयन्ती तमन्वगात् ॥ ११ ॥
क्षुधया पीड्यमानस्तु नलो बहुतिथेऽहनि ।
अपश्यच्छकुनान्कांश्चिद्धिरण्यसदृशच्छदान् ॥ १२ ॥
स चिन्तयामास तदा निषधाधिपतिर्बली ।
अस्ति भक्षो ममाद्यायं वसु चेदं भविष्यति ॥ १३ ॥
ततस्तान्परिधानेन वाससा स समावृणोत् ।
तस्य तद्वस्त्रमादाय सर्वे जग्मुर्विहायसा ॥ १४ ॥
उत्पतन्तः खगा वाक्यमेतदाहुस्ततो नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् ॥ १५ ॥
वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः ।
आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥ १६ ॥
तान्समीक्ष्य गतानक्षानात्मानं च विवाससम् ।
पुण्यश्लोकस्तदा राजन्दमयन्तीमथाब्रवीत् ॥ १७ ॥

येषां प्रकोपादैश्वर्यात्प्रच्युतोहमनिन्दिते ।
प्राणयात्रां न विन्दे च दुःखितः क्षुधयान्वितः ॥ १८ ॥
येषां कृते न सत्कारमकुर्वन्मयि नैषधाः ।
त इमे शकुना भूत्वा वासोप्यपहरन्ति मे ॥ १९ ॥
वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः ।
भर्ता तेहं निबोधेदं वचनं हितमात्मनः ॥ २० ॥
एते गच्छन्ति बहवः पन्थानो दक्षिणापथम् ।
अवन्तीमृक्षवन्तं च समतिक्रम्य पर्वतम् ॥ २१ ॥
एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा ।
आश्रमाश्च महर्षीणां बहुमूलफलान्विताः ॥ २२ ॥
एष पन्था विदर्भाणामसौ गच्छति कोसलान् ।
अतः परं च देशोयं दक्षिणे दक्षिणापथः ॥ २३ ॥
एतद्वाक्यं नलो राजा दमयन्तीं समाहितः ।
उवाचासकृदार्त्तो हि भैमीमुद्दिश्य भारत ॥ २४ ॥
ततः सा बाष्पकलया वाचा दुःखेन कर्षिता ।
उवाच दमयन्ती तं नैषधं करुणं वचः ॥ २५ ॥
उद्वेजते मे हृदयं सीदन्त्यङ्गानि सर्वशः ।
तव पार्थिव संकल्पं चिन्तयन्त्याः पुनःपुनः ॥ २६ ॥
हृतराज्यं हृतद्रव्यं विवस्त्रं क्षुत्तृषान्वितम् ।
कथमुत्सृज्य गच्छेयमहं त्वां निर्जने वने ॥ २७ ॥

श्रान्तस्य ते क्षुधार्त्तस्य चिन्तयानस्य तत्सुखम् ।
वने घोरे महाराज नाशयिष्याम्यहं क्लमम् ॥ २८ ॥
न च भार्यासमं किंचिद्विद्यते भिषजां मतम् ।
औषधं सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥ २९ ॥

॥ नल उवाच ॥

एवमेतद्यथात्थ त्वं दमयन्ति सुमध्यमे ।
नास्ति भार्यासमं मित्रं नरस्यार्त्तस्य भेषजम् ॥ ३० ॥
न चाहं त्यक्तुकामस्त्वां किमर्थं भीरु शङ्कसे ।
त्यजेयमहमात्मानं न चैवं त्वामनिन्दिते ॥ ३१ ॥

॥ दमयन्त्युवाच ॥

यदि मां त्वं महाराज न विहातुमिहेच्छसि ।
तत्किमर्थं विदर्भाणां पन्थाः समुपदिश्यते ॥ ३२ ॥
अवैमि चाहं नृपते न तु मां त्यक्तुमर्हसि ।
चेतसा त्वपकृष्टेन मां त्यजेथा महीपते ॥ ३३ ॥
पन्थानं हि ममाभीक्ष्णमाख्यासि च नरोत्तम ।
अतो निमित्तं शोकं मे वर्धयस्यमरोपम ॥ ३४ ॥
यदि चायमभिप्रायस्तव ज्ञातीन्व्रजेदिति ।
सहितावेव गच्छावो विदर्भान्यदि मन्यसे ॥ ३५ ॥

विदर्भराजस्तत्र त्वां पूजयिष्यति मानद ।
तेन त्वं पूजितो राजन् सुखं वत्स्यासि नो गृहे ॥ ३६ ॥

॥ इति नलोपाख्याने नवमोध्यायः ॥

---

## ॥ नल उवाच ॥

यथा राज्यं तव पितुस्तथा मम न संशयः ।
न तु तत्र गमिष्यामि विषमस्थः कथंचन ॥ १ ॥
कथं समृद्धो गत्वाहं तव हर्षविवर्धनः ।
परिच्युतो गमिष्यामि तव शोकविवर्धनः ॥ २ ॥

## ॥ बृहदश्व उवाच ॥

इति ब्रुवन्नलो राजा दमयन्तीं पुनःपुनः ।
सान्त्वयामास कल्याणीं वाससोर्धेन संवृताम् ॥ ३ ॥
तावेकवस्त्रसंवीतावटमानावितस्ततः ।
क्षुत्पिपासापरिश्रान्तौ सभां कांचिदुपेयतुः ॥ ४ ॥
तां सभामुपसंप्राप्य तदा स निषधाधिपः ।
वैदर्भ्या सहितो राजा निषसाद महीतले ॥ ५ ॥
स वै विवस्त्रो विकटो मलिनः पांसुगुण्ठितः ।
दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले ॥ ६ ॥

दमयन्त्यपि कल्याणी निद्रयापहृता ततः ।
सहसा दुःखमासाद्य सुकुमारी तपस्विनी ॥ ७ ॥
सुप्तायां दमयन्त्यां तु नलो राजा विशांपते ।
शोकोन्मथितचित्तात्मा न स्म शेते यथा पुरा ॥ ८ ॥
स तद्राज्यापहरणं सुहृत्त्यागं च सर्वशः ।
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ॥ ९ ॥
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
किं नु मे मरणं श्रेयः परित्यागो जनस्य वा ॥ १० ॥
मामियं ह्यनुरक्तैव दुःखमाप्नोति मत्कृते ।
मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति ॥ ११ ॥
मयि निःसंशयं दुःखमियं प्राप्स्यत्यनुव्रता ।
उत्सर्गे संशयः स्यात्तु विन्देतापि सुखं क्वचित् ॥ १२ ॥
स विनिश्चित्य बहुधा विचार्य च पुनःपुनः ।
उत्सर्गं मन्यते श्रेयो दमयन्त्या नराधिपः ॥ १३ ॥
न चैषा तेजसा शक्या कैश्चिद्धर्षयितुं पथि ।
यशस्विनी महाभागा मद्भक्तेयं पतिव्रता ॥ १४ ॥
एवं तस्य तदा बुद्धिर्दमयन्त्यां न्यवर्तत ।
कलिना दुष्टभावेन दमयन्त्या विसर्जने ॥ १५ ॥
सोवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम् ।
चिन्तयित्वाध्यगाद्राजा वस्त्रार्धस्यावकर्तनम् ॥ १६ ॥

कथं वासो विकर्तेयं न च बुध्येत मे प्रिया ।
विचिन्त्यैवं नलो राजा सभां पर्यचरत्तदा ॥ १७ ॥
परिधावन्नथ नल इतश्चेतश्च भारत ।
आससाद सभोद्देशे विकोशं खड्गमुत्तमम् ॥ १८ ॥
तेनार्धं वाससश्छित्त्वा निवस्य च परंतपः ।
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनः ॥ १९ ॥
ततो निवृत्तहृदयः पुनरागम्य तां सभाम् ।
दमयंन्तीं तदा दृष्ट्वा रुरोद निषधाधिपः ॥ २० ॥
यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम् ।
सेयमद्य सभामध्ये शेते भूमावनाथवत् ॥ २१ ॥
इयं वस्त्रावकर्तेन संवीता चारुहासिनी ।
उन्मत्तेव वरारोहा कथं बुद्ध्वा भविष्यति ॥ २२ ॥
कथमेका सती भैमी मया विरहिता शुभा ।
चरिष्यति वने घोरे मृगव्यालनिषेविते ॥ २३ ॥
आदित्या वसवो रुद्रा अश्विनौ समरुद्गणौ ।
रक्षन्तु त्वां महाभागे धर्मेणासि समावृता ॥ २४ ॥
एवमुक्त्वा प्रियां भार्यां रूपेणाप्रतिमां भुवि ।
कलिनापहृतज्ञानो नलः प्रातिष्ठदुद्यतः ॥ २५ ॥
गत्वा गत्वा नलो राजा पुनरेति सभां मुहुः ।
आकृष्यमाणः कलिना सौहृदेनावकृष्यते ॥ २६ ॥

द्विधेव हृदयं तस्य दुःखितस्याभवत्तदा ।
दोलेव मुहुरायाति याति चैव सभां प्रति ॥ २७ ॥
अवकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः ।
सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु ॥ २८ ॥
नष्टात्मा कलिना स्पृष्टस्तत्तद्विगणयन्नृपः ।
जगामैकां वने शून्ये भार्यामुत्सृज्य दुःखितः ॥ २९ ॥

॥ इति नलोपाख्याने दशमोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

अपक्रान्ते नले राजन्दमयन्ती गतक्लमा ।
अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ १ ॥
अपश्यमाना भर्तारं शोकदुःखसमन्विता ।
प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् ॥ २ ॥
हा नाथ हा महाराज हा स्वामिन्किं जहासि माम् ।
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ॥ ३ ॥
ननु नाम महाराज धर्मज्ञः सत्यवागसि ।
कथमुक्त्वा तथासत्यं सुप्तामुत्सृज्य मां गतः ॥ ४ ॥
कथमुत्सृज्य गन्तासि दक्षां भार्यामनुव्रताम् ।
विशेषतोनपकृते परेणापकृते सति ॥ ५ ॥

शक्यसे ता गिरः सम्यक्कर्तुं मयि नरेश्वर ।
यास्तेषां लोकपालानां संनिधौ कथिताः पुरा ॥ ६ ॥
नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ ।
यत्र कान्ता त्वयोत्सृष्टा मुहूर्तमपि जीवति ॥ ७ ॥
पर्याप्तः परिहासोयमेतावान्पुरुषर्षभ ।
भीताहमतिदुर्धर्ष दर्शयात्मानमीश्वर ॥ ८ ॥
दृश्यसे दृश्यसे राजन्नेष दृष्टोसि नैषध ।
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ९ ॥
नृशंसं बत राजेन्द्र यन्मामेवंगतामिह ।
विलपन्तीं समागम्य नाश्वासयसि पार्थिव ॥ १० ॥
न शोचाम्यहमात्मानं न चान्यदपि किंचन ।
कथं नु भवितास्येक इति त्वां नृप शोचिमि ॥ ११ ॥
कथं नु राजंस्तृषितः क्षुधितः श्रमकर्षितः ।
सायाह्ने वृक्षमूलेषु मामपश्यन्भविष्यसि ॥ १२ ॥
ततः सा तीव्रशोकार्त्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत दुःखिता ॥ १३ ॥
मुहुरुत्पतते बाला मुहुः पतति विह्वला ।
मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ १४ ॥
अतीव शोकसंतप्ता मुहुर्निःश्वस्य दुःखिता ।
उवाच भैमी निःश्वस्य रुदत्यथ पतिव्रता ॥ १५ ॥

यस्याभिशापाद्दुःखार्त्तो दुःखं विन्दति नैषधः ।
तस्य भूतस्य नो दुःखाद्दुःखमभ्यधिकं भवेत् ॥ १६ ॥
अपापचेतसं पापो य एवं कृतवान्नलम् ।
तस्माद्दुःखतरं प्राप्य जीवत्वसुखजीविकाम् ॥ १७ ॥
एवं तु विलपन्ती सा राज्ञो भार्या महात्मनः ।
हाहा राजन्निति मुहुरितश्चेतश्च धावति ॥१८ ॥
तां क्रन्दमानामत्यर्थं कुररीमिव वाशतीम् ।
करुणं बहु शोचन्तीं विलपन्तीं मुहुर्मुहुः ॥१९ ॥
सहसाभ्यागतां भैमीमभ्यासपरिवर्तिनीम् ।
अग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ॥ २० ॥
सा ग्रस्यमाना ग्राहेण शोकेन च परिप्लुता ।
नात्मानं शोचति तथा यथा शोचति नैषधम् ॥ २१ ॥
हा नाथ मामिह वने ग्रस्यमानामनाथवत् ।
ग्राहेणानेन विजने किमर्थं नानुधावसि ॥ २२ ॥
कथं भविष्यसि पुनर्मामनुस्मृत्य नैषध ।
शापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चेतो धनानि च ॥ २३ ॥
श्रान्तस्य ते क्षुधार्त्तस्य परिग्लानस्य नैषध ।
कः श्रमं राजशार्दूल नाशयिष्यति तेनघ ॥ २४ ॥
ततः कश्चिन्मृगव्याधो विचरन्गहने वने ।
आक्रन्दमानां संश्रुत्य जवेनाभिससार ह ॥ २५ ॥

मुखतः पाटयामास शस्त्रेण निशितेन च ।
निर्विचेष्टं भुजंगं तं विशस्य मृगजीवनः ॥ २६ ॥
मोक्षयित्वा स तां व्याधः प्रक्षाल्य सलिलेन च ।
समाश्वास्य कृताहारामथ पप्रच्छ भारत ॥ २७ ॥
कस्य त्वं मृगशावाक्षि कथं चाभ्यागता वनम् ।
कथं चेदं महत्कृच्छ्रं प्राप्तवत्यसि भाविनि ॥ २८ ॥
दमयन्ती तथानेन पृच्छ्यमाना विशांपते ।
सर्वमेतद्यथावृत्तमाचचक्षेस्य भारत ॥ २९ ॥
तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ।
सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम् ॥ ३० ॥
अरालपक्ष्मनयनां तथा मधुरभाषिणीम् ।
लक्षयित्वा मृगव्याधः कामस्य वशमीयिवान् ॥ ३१ ॥
तामेवं श्लक्ष्णया वाचा लुब्धको मृदुपूर्वया ।
सान्त्वयामास कामार्त्तस्तदबुध्यत भाविनी ॥ ३२ ॥
दमयन्त्यपि तं दुष्टमुपलभ्य पतिव्रता ।
तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना ॥ ३३ ॥
स तु पापमतिः क्षुद्रः प्रधर्षयितुमातुरः ।
दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव ॥ ३४ ॥
दमयन्ती तु दुःखार्त्ता पतिराज्यविनाकृता ।
अतीतवाक्पथे काले शशापैनं रुषान्विता ॥ ३५ ॥

यथाहं नैषधादन्यं मनसापि न चिन्तये ।
तथायं पततां क्षुद्रः परासुर्मृगजीवनः ॥ ३६ ॥
उक्तमात्रे तु वचने तथा स मृगजीवनः ।
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥ ३७ ॥

॥ इति नलोपाख्याने एकादशोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ।
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ॥ १ ॥
सिंहद्वीपिरुरुव्याघ्रमहिषर्क्षगणैर्युतम् ।
नानापक्षिगणाकीर्णं म्लेच्छतस्करसेवितम् ॥ २ ॥
जम्ब्वाम्रलोध्रखदिरशालवेत्रसमाकुलम् ।
पद्मकामलकप्लक्षकदम्बोदुम्बरावृतम् ॥ ३ ॥
नानाधातुशतैर्नद्धान्विविधानपि चाचलान् ।
सरितो निर्झरांश्चैव ददर्शाद्भुतदर्शनान् ॥ ४ ॥
यूथशो ददृशे चात्र विदर्भाधिपनन्दिनी ।
महिषांश्च वराहांश्च ऋक्षांश्च वनपन्नगान् ॥ ५ ॥
तेजसा यशसा लक्ष्म्या स्थित्या च परया युता ।
नाबिभ्यत्सा नृपसुता भैमी तत्राथ कस्यचित् ॥ ६ ॥

दारुणामटवीं प्राप्य भर्तृव्यसनपीडिता ।
विदर्भतनया राजन्विललाप सुदुःखिता ॥ ७ ॥
व्यूढोरस्क महाबाहो नैषधानां जनाधिप ।
क्व नु राजन्गतोसीह त्यक्त्वा मां विजने वने ॥ ८ ॥
अश्वमेधादिभिर्वीर क्रतुभिर्भूरिदाक्षिणैः ।
कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्तसे ॥ ९ ॥
यत्त्वयोक्तं नरश्रेष्ठ मत्समक्षं महाद्युते ।
स्मर्तुमर्हसि कल्याण वचनं पार्थिवर्षभ ॥ १० ॥
यच्चोक्तं विहगैर्हंसैः समीपे तव भूमिप ।
मत्समक्षं यदुक्तं च तदवेक्षितुमर्हसि ॥ ११ ॥
हा वीर ननु नामाहमिष्टा किल तवानघ ।
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे ॥ १२ ॥
भक्षयत्येष मां रौद्रो व्यात्तास्यो दारुणाकृतिः ।
अरण्यराट् क्षुधाविष्टः किं मां न त्रातुमर्हसि ॥ १३ ॥
न मे त्वदन्या काचिद्धि प्रियास्तीत्यब्रवीः सदा ।
तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप ॥ १४ ॥
उन्मत्तां विलपन्तीं मां भार्यामिष्टां नराधिप ।
ईप्सितामीप्सितो नाथ किं मां न प्रतिभाषसे ॥ १५ ॥
यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन ।
न मानयसि मामार्य रुदतीमरिकर्षण ॥ १६ ॥

महाराज महारण्ये अहमेकाकिनी सती ।
दमयन्त्यभिभाषे त्वां किं मां न प्रतिभाषसे ॥ १७ ॥
कुलशीलोपसंपन्न चारुसर्वाङ्गदर्शन ।
नाद्य त्वां प्रतिपश्यामि गिरावस्मिन्नरोत्तम ॥ १८ ॥
वने चास्मिन्महाघोरे सिंहव्याघ्रनिषेविते ।
शयानमुपविष्टं वा स्थितं वा निषधाधिप ॥ १९ ॥
कं नु पृच्छामि दुःखार्त्ता त्वदर्थे शोककर्षिता ।
कच्चिद्दृष्टस्त्वयारण्ये संगत्येह नलो नृपः ॥ २० ॥
यमन्वेषसि राजानं नलं पद्मनिभेक्षणम् ।
अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरम् ॥ २१ ॥
अरण्यराडयं श्रीमांश्चतुर्दंष्ट्रो महाहनुः ।
शार्दूलोभिमुखोभ्येति व्रजाम्येनमशङ्किता ॥ २२ ॥
भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः ।
विदर्भराजतनयां दमयन्तीति विद्धि माम् ॥ २३ ॥
पतिमन्वेषतीमेकां कृपणां शोककर्षिताम् ।
आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ॥ २४ ॥
अथवा त्वं वनपते नलं यदि न शंससि ।
मां खादय मृगश्रेष्ठ दुःखादस्माद्विमोचय ॥ २५ ॥
श्रुत्वारण्ये विलपितं ममैष मृगराट् स्वयम् ।
यात्येतां मृष्टसलिलामापगां सागरंगमाम् ॥ २६ ॥

इमं शिलोच्चयं पुण्यं शृङ्गैर्बहुभिरुच्छ्रितैः ।
विराजद्भिर्दिविस्पृग्भिर्नैकवर्णैर्मनोहरैः ॥ २७ ॥
अस्यारण्यस्य महतः केतुभूतमिवोत्थितम् ।
गिरिराजमिमं तावत्पृच्छामि नृपतिं प्रति ॥ २८ ॥
भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत ।
शरण्य बहुकल्याण नमस्तेस्तु महीधर ॥ २९ ॥
प्रणमे त्वाभिगम्याहं राजपुत्रीं निबोध माम् ।
राज्ञः स्नुषां राजभार्यां दमयन्तीति विश्रुताम् ॥ ३० ॥
विदर्भराजाधिपतिः पिता मम महारथः ।
भीमो नाम क्षितिपतिश्चातुर्वर्ण्यस्य रक्षिता ॥ ३१ ॥
राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम् ।
आहर्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः ॥ ३२ ॥
ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः ।
शीलवान्वीर्यसंपन्नः पृथुश्रीर्धर्मविच्छुचिः ॥ ३३ ॥
सम्यग्गोप्ता विदर्भाणां निर्जितारिगणः प्रभुः ।
तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थिताम् ॥ ३४ ॥
निषधेषु महाराजः श्वशुरो मे नरोत्तमः ।
गृहीतनामा विख्यातो वीरसेन इति स्म ह ॥ ३५ ॥
क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह ।
नलो नामारिहा श्यामः पुण्यश्लोक इति श्रुतः ॥ ३६ ॥

ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत्सोमपोग्निमान् ।
यष्टा दाता च योद्धा च सम्यक्चैव प्रशासिता ॥ ३७ ॥
तस्य मामचलश्रेष्ठ विद्धि भार्यामिहागताम् ।
अन्वेषमाणां भर्तारं तं वै नरवरोत्तमम् ॥ ३८ ॥
खमुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृपः ।
कच्चिद्दृष्टोचलश्रेष्ठ वनेस्मिन्दारुणे नलः ॥ ३९ ॥
गजेन्द्रविक्रमो धीमान्दीर्घबाहुरमर्षणः ।
निषधानामधिपतिः कच्चिद्दृष्टस्त्वया नलः ॥ ४० ॥
किं मां विलपन्तीमेकां पर्वतश्रेष्ठ विह्वलाम् ।
गिरा नाश्वासयस्यद्य स्वां सुतामिव दुःखिताम् ॥ ४१ ॥
कदा सुस्निग्धगम्भीरां जीमूतस्वनसंनिभाम् ।
श्रोष्यामि नैषधस्याहं वाचंताममृतोपमाम् ॥ ४२ ॥
इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी ।
दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ॥ ४३ ॥
सा गत्वा त्रीनहोरात्रान्ददर्श परमाङ्गना ।
तापसारण्यमतुलं दिव्यकाननदर्शनम् ॥ ४४ ॥
वसिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम् ।
नियतैः संयताहारैर्दमशौचसमन्वितैः ॥ ४५ ॥
तापसैः समुपेतं च सा दृष्ट्वैव समाश्वसत् ।
वर्चस्विनी सुप्रतिष्ठा स्वसितायतलोचना ॥ ४६ ॥

सा विवेशाश्रमपदं वीरसेनसुतप्रिया ।
योषिद्रत्नं महाभागा दमयन्ती तपस्विनी ॥ ४७ ॥
साभिवाद्य तपोवृद्धान्विनयावनता स्थिता ।
स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसैश्च सा ॥ ४८ ॥
पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः ।
आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहे ॥ ४९ ॥
तानुवाच वरारोहा कच्चिद्भगवतामिह ।
तपस्यग्निषु कुशलं स्वधर्मचरणेषु च ॥ ५० ॥
तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनि ।
ब्रूहि सर्वानवद्याङ्गि का त्वं किं च चिकीर्षसि ॥ ५१ ॥
दृष्ट्वैव ते परं रूपं द्युतिं च परमामिह ।
विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः ॥ ५२ ॥
अस्यारण्यस्य देवी त्वमुताहोस्य महीभृतः ।
अस्याश्च नद्याः कल्याणि वद सत्यमनिन्दिते ॥ ५३ ॥
साब्रवीत्तानृषीन्नाहमरण्यस्यास्य देवता ।
न चाप्यस्य गिरेर्विप्रा नैव नद्याश्च देवता ॥ ५४ ॥
मानुषीं मां विजानीत यूयं सर्वे तपोधनाः ।
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ॥ ५५ ॥
विदर्भेषु महीपालो भीमो नाम महीपतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥ ५६ ॥

निषधाधिपतिर्धीमान्नलो नाम महायशाः ।
वीरः संग्रामजिद्विद्वान्मम भर्ता विशांपतिः ॥ ५७ ॥
देवताभ्यर्चनपरो द्विजातिजनवत्सलः ।
गोप्ता निषधवंशस्य महातेजा महाबलः ॥ ५८ ॥
स कैश्चिन्निकृतिप्रज्ञैरनार्यैरकृतात्मभिः ।
आहूय देवने जिह्मैर्जितो राज्यं वसूनि च ॥ ५९ ॥
तस्य मामवगच्छध्वं भार्यां राजर्षभस्य वै ।
दमयन्तीति विख्यातां भर्तुर्दर्शनलालसाम् ॥ ६० ॥
सा वनानि गिरींश्चैव विचरामीह दुःखिता ।
अन्वेषमाणा भर्तारं नलं रणविशारदम् ॥ ६१ ॥
कच्चिद्भगवतां रम्यं तपोवनमिदं नृपः ।
भवेत्प्राप्तो नलो नाम निषधानां जनाधिपः ॥ ६२ ॥
यत्कृतेहमिदं दुर्गं प्रपन्ना भृशदारुणम् ।
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम् ॥ ६३ ॥
यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम् ।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोचनात् ॥ ६४ ॥
को नु मे जीवितेनार्थस्तमृते पुरुषर्षभम् ।
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता ॥ ६५ ॥
तथा विलपन्तीमेकामरण्ये भीमनन्दिनीम् ।
दमयन्तीमथोचुस्ते तापसाः सत्यदर्शिनः ॥ ६६ ॥

उदर्कस्तव कल्याणि कल्याणो भविता शुभे ।
वयं पश्यामस्तपसा क्षिप्रं द्रक्ष्यसि नैषधम् ॥ ६७ ॥
निषधानामधिपतिं नलं रिपुनिपातिनम् ।
भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरम् ॥ ६८ ॥
विमुक्तं सर्वपापेभ्यः सर्वरत्नसमन्वितम् ।
तदेव नगरं भूयः प्रशासतमरिंदमम् ॥ ६९ ॥
द्विषतां भयकर्तारं सुहृदां शोकनाशनम् ।
पतिं द्रक्ष्यसि कल्याणि कल्याणाभिजनं नृपम् ॥ ७० ॥
एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम् ।
तापसान्तर्हिताः सर्वे साग्निहोत्राश्रमास्तदा ॥ ७१ ॥
सा दृष्ट्वा महदाश्चर्यं विस्मिता ह्यभवत्तदा ।
दमयन्त्यनवद्याङ्गी वीरसेननृपस्नुषा ॥ ७२ ॥
किं नु स्वप्नो मया दृष्टः कोयं विधिरिहाभवत् ।
क्व नु ते तापसाः सर्वे क्व तदाश्रममण्डलम् ॥ ७३ ॥
ध्यात्वा चिरं भीमसुता दमयन्ती शुचिस्मिता ।
भर्तृशोकपरा दीना विवर्णवदनाभवत् ॥ ७४ ॥
सा गत्वाथापरां भूमिं बाष्पसंदिग्धया गिरा ।
विललापाश्रुपूर्णाक्षी दृष्ट्वाशोकतरुं ततः ॥ ७५ ॥
अहो बतायमगमः श्रीमानस्मिन्वनान्तरे ।
आपीडैर्बहुभिर्भाति श्रीमान्पर्वतराडिव ॥ ७६ ॥

वीतशोकभयाबाधं कच्चित्त्वं दृष्टवान्नृपम् ।
नलं नामारिमर्दनं दमयन्त्याः प्रियं पतिम् ॥ ७७ ॥
एकवस्त्रार्धसंवीतं सुकुमारतनुत्वचम् ।
व्यसनेनार्दितं वीरमरण्यमिदमागतम् ॥ ७८ ॥
यथा विशोका गच्छेयमशोकनग तत्कुरु ।
सत्यनामा भवाशोक अशोकः शोकनाशनः ॥ ७९ ॥
एवं साशोकवृक्षं तमार्त्ता वै परिगम्य ह ।
जगाम दारुणतरं देशं भैमी वराङ्गना ॥ ८० ॥
सा ददर्श नगान्नैकान्नैकाश्च सरितस्तथा ।
नैकांश्च पर्वतान्रम्यान्नैकांश्च मृगपक्षिणः ॥ ८१ ॥
गत्वा प्रकृष्टमध्वानं दमयन्ती शुचिस्मिता ।
ददर्शाथ महासार्थं हस्त्यश्वरथसंकुलम् ॥ ८२ ॥
उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम् ।
सुशान्ततोयां विस्तीर्णां ह्रदिनीं वेतसैर्वृताम् ॥ ८३ ॥
सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी ।
उपसर्प्य वरारोहा जनमध्यं विवेश ह ॥ ८४ ॥
उन्मत्तरूपा शोकार्त्ता तथा वस्त्रार्धसंवृता ।
कृशा विवर्णा मलिना पांसुध्वस्तशिरोरुहा ॥ ८५ ॥
तां दृष्ट्वा तत्र मनुजाः केचिद्भीताः प्रदुद्रुवुः ।
केचिच्चिन्तापरास्तस्थुः केचित्तत्र प्रचुक्रुशुः ॥ ८६ ॥

प्रहसन्ति स्म तां केचिदभ्यसूयन्ति चापरे ।
अकुर्वत दयां केचित्पप्रच्छुश्चापि भारत ॥ ८७ ॥
कासि कस्यासि कल्याणि किं वा मृगयसे वने ।
त्वां दृष्ट्वा व्यथिताः स्मेह कच्चित्त्वमसि मानुषी ॥ ८८ ॥
यक्षी वा राक्षसी वा त्वमुताहोसि सुराङ्गना ।
सर्वथा कुरु नः स्वस्ति रक्ष चास्माननिन्दिते ॥ ८९ ॥
यथायं सर्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत् ।
तथा विधत्स्व कल्याणि यथा श्रेयो हि नो भवेत् ॥९०॥
प्रत्युवाच ततः साध्वी भर्तृव्यसनपीडिता ।
सार्थवाहं च सार्थं च जना ये तत्र केचन ॥ ९१ ॥
मानुषीं मां विजानीत मनुजाधिपतेः सुताम् ।
नृपस्नुषां राजभार्यां भर्तृदर्शनलालसाम् ॥ ९२ ॥
विदर्भराण्मम पिता भर्ता राजा च नैषधः ।
नलो नाम महाभागस्तं मार्गाम्यपराजितम् ॥ ९३ ॥
यदि जानीथ नृपतिं क्षिप्रं शंसत मे प्रियम् ।
नलं पुरुषशार्दूलममित्रगणसूदनम् ॥ ९४ ॥
तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः ।
सार्थवाहः शुचिर्नाम शृणु कल्याणि मद्वचः ॥ ९५ ॥
अहं सार्थस्य नेता वै सार्थवाहः शुचिस्मिते ।
मनुष्यं नलनामानं न पश्यामि यशस्विनि ॥ ९६ ॥

कुञ्जरद्वीपिमहिषशार्दूलर्क्षमृगानपि ।
पश्याम्यस्मिन्वने कृत्स्ने ह्यमनुष्यनिषेविते ॥ ९७ ॥
ऋते त्वां मानुषीं मर्त्यं न पश्यामि महावने ।
तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु ॥ ९८ ॥
साब्रवीद्वणिजः सर्वान्सार्थवाहं च तं ततः ।
क्व नु यास्यति सार्थोयमेतदाख्यातुमर्हसि ॥ ९९ ॥

## ॥ सार्थवाह उवाच ॥

सार्थोयं चेदिराजस्य सुबाहोः सत्यदर्शिनः ।
क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे ॥ १०० ॥

॥ इति नलोपाख्यामे द्वादशोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

सा तच्छ्रुत्वानवद्याङ्गी सार्थवाहवचस्तदा ।
जगाम सह तेनैव सार्थेन पतिलालसा ॥ १ ॥
अथ काले बहुतिथे वने महति दारुणे ।
तडागं ददृशू रम्यं प्रभूतयवसेन्धनम् ॥ २ ॥
बहुपुष्पफलोपेतं नानापक्षिनिषेवितम् ।
निर्मलस्वादुसलिलं मनोहारि सुशीतलम् ॥ ३ ॥

सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः।
संमते सार्थवाहस्य विविशुर्वनमुत्तमम् ॥ ४ ॥
उवास सार्थः स महान्वेलामासाद्य पश्चिमाम् ।
अथार्धरात्रसमये निःशब्दस्तिमिते तदा ॥ ५ ॥
सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत् ।
पानीयार्थं गिरिनदीं मदप्रस्त्रवणाविलाम् ॥ ६ ॥
ते तान्ग्राम्यगजान्दृष्ट्वा सर्वे वनगजास्तदा ।
समाद्रवन्त वेगेन जिघांसन्तो मदोत्कटाः ॥ ७ ॥
तेषामापततां वेगः करिणां दुःसहोभवत् ।
नगाग्रादिव शीर्णानां शृङ्गाणां पततां क्षितौ ॥ ८ ॥
मार्गं संरुध्य संसुप्तं पद्मिन्याः सार्थमुत्तमम् ।
ते तं ममर्दुः सहसा चेष्टमानं महीतले ॥ ९ ॥
हाहाकारं प्रमुञ्चन्तः सार्थिकाः शरणार्थिनः ।
वनगुल्मांश्च धावन्तो निद्रान्धा बहवोभवन् ॥ १० ॥
निहतोष्ट्राश्च बहुलाः पदातिजनसंकुलाः ।
भयादाधावमानाश्च परस्परहतास्तदा ॥ ११ ॥
घोरान्नादान्विमुञ्चन्तो निपेतुर्धरणीतले ।
वृक्षेष्वारुह्य संरब्धाः पतिता विषमेषु च ॥ १२ ॥
एवंप्रकारैर्बहुभिर्दैवेनाक्रम्य हस्तिभिः ।
राजन्विनिहतं सर्वं समृद्धं सार्थमण्डलम् ॥ १३ ॥

आथापरेद्युः संप्राप्ते हतशिष्टा जनास्तदा ।
देशात्तस्माद्विनिष्क्रम्य शोचन्ते वैशसं कृतम् ॥ १४ ॥
भ्रातरं पितरं पुत्रं सखायं च नराधिप ।
अशोचत्तत्र वैदर्भी किं नु मे दुष्कृतं कृतम् ॥ १५ ॥
योपि मे निर्जनेरण्ये संप्राप्तोयं जनार्णवः ।
स हतो हस्तियूथेन मन्दभाग्यान्ममैव तत् ॥ १६ ॥
नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनम् ।
यन्नाहमद्य मृदिता हस्तियूथेन दुःखिता ॥ १७ ॥
न ह्यदैवं कृतं किंचिन्नराणामिह विद्यते ।
न च मे बालभावेपि किंचित्पापकृतं कृतम् ॥ १८ ॥
मन्ये स्वयंवरकृते लोकपालाः समागताः ।
प्रत्याख्याता मया तत्र नलस्यार्थाय देवताः ॥ १९ ॥
एवमादीनि दुःखार्त्ता सा विलप्य वराङ्गना ।
आगच्छद्राजशार्दूल चन्द्रलेखेव शारदी ॥ २० ॥
गच्छन्ती साचिराद्बाला पुरमासादयन्महत् ।
सायाह्ने चेदिराजस्य सुबाहोः सत्यदर्शिनः ॥ २१ ॥
तां विह्वलां कृशां दीनां मुक्तकेशीममार्जिताम् ।
उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः ॥ २२ ॥
प्रविशन्तीं तु तां दृष्ट्वा चेदिराजपुरीं तदा ।
अनुजग्मुस्तत्र बाला ग्रामिपुत्राः कुतूहलात् ॥ २३ ॥

तां प्रासादगतापश्यद्राजमाता जनैर्वृताम् ।
धात्रीमुवाच गच्छैनामानयेह ममान्तिकम् ॥ २४ ॥
जनेन क्लिश्यते बाला दुःखिता शरणार्थिनी ।
तादृग्रूपं च पश्यामि विद्योतयति मे गृहम् ॥ २५ ॥
सा जनं वारयित्वा तं प्रासादतलमुत्तमम् ।
आरोप्य विस्मिता राजन्दमयन्तीमपृच्छत ॥ २६ ॥
एवमप्यसुखाविष्टा बिभर्षि परमं वपुः ।
भासि विद्युदिवाभ्रेषु शंस मे कासि कस्य वा ॥ २७ ॥
न हि ते मानुषं रूपं भूषणैरपि वर्जितम् ।
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे ॥ २८ ॥
तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत् ।
मानुषीं मां विजानीहि भर्तारं समनुव्रताम् ॥ २९ ॥
सैरन्ध्रीं जातिसंपन्नां भुजिष्यां कामवासिनीम् ।
फलमूलाशनामेकां यत्रसायंप्रतिश्रयाम् ॥ ३० ॥
असङ्ख्येयगुणो भर्त्ता मां च नित्यमनुव्रतः ।
भक्ताहमपि तं वीरं छायेवानुगता पथि ॥ ३१ ॥
तस्य दैवात्प्रसङ्गोभूदतिमात्रं स्म देवने ।
द्यूते स निर्जितश्चैव वनमेक उपेयिवान् ॥ ३२ ॥

तमेकवसनं वीरमुन्मत्तमिव विह्वलम् ।
आश्वासयन्ती भर्तारमहमभ्यगमं वनम् ॥ ३३ ॥
स कदाचिद्वने वीरः कस्मिंश्चित्कारणान्तरे ।
क्षुत्परीतस्तु विमनास्तदप्येकं व्यसर्जयत् ॥ ३४ ॥
तमेकवसना नग्नमुन्मत्तवदचेतनम् ।
अनुव्रजन्ती बहुला न स्वपामि निशास्तदा ॥ ३५ ॥
ततो बहुतिथे काले सुप्तामुत्सृज्य स क्वचित् ।
वाससोर्धं परिच्छिद्य त्यक्तवान्मामनागसम् ॥ ३६ ॥
तं मार्गमाणा भर्तारं दह्यमाना दिवानिशम् ।
न विन्दाम्यमरप्रख्यं प्रियं प्राणेश्वरं प्रभुम् ॥ ३७ ॥
तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु ।
राजमाताब्रवीदार्त्तां भैमीमार्त्ततरा स्वयम् ॥ ३८ ॥
वसस्व मयि कल्याणि प्रीतिर्मे परमा त्वयि ।
मृगयिष्यन्ति ते भद्रे भर्तारं पुरुषा मम ॥ ३९ ॥
अपिवा स्वयमागच्छेत्परिधावन्नितस्ततः ।
इहैव वसती भद्रे भर्तारमुपलप्स्यसे ॥ ४० ॥
राजमातुर्वचः श्रुत्वा दमयन्ती वचोब्रवीत् ।
समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि ॥ ४१ ॥
उच्छिष्टं नैव भुञ्जीयां न कुर्यां पादधावनम् ।
न चाहं पुरुषानन्यान्प्रभाषेयं कथंचन ॥ ४२ ॥

प्रार्थयेद्यदि मां कश्चिद्दण्ड्यस्ते स पुमान्भवेत् ।
भर्तुरन्वेषणार्थं तु पश्येयं ब्राह्मणानहम् ॥ ४३ ॥
यद्येवमिह कर्तव्यं वत्स्याम्यहमसंशयम् ।
अतोन्यथा न मे वासो वर्तते हृदये क्वचित् ॥ ४४ ॥
तां प्रहृष्टेन मनसा राजमातेदमब्रवीत् ।
सर्वमेतत्करिष्यामि दिष्ट्या ते व्रतमीदृशम् ॥ ४५ ॥
एवमुक्त्वा ततो भैमीं राजमाता विशांपते ।
उवाचेदं दुहितरं सुनन्दां नाम भारत ॥ ४६ ॥
सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम् ।
वयसा तुल्यतां प्राप्ता सखी तव भवत्वियम् ॥ ४७ ॥
ततः परमसंहृष्टा सुनन्दा गृहमागमत् ।
दमयन्तीमुपादाय सखीभिः परिवारिता ॥ ४८ ॥

॥ इति नलोपाख्याने त्रयोदशोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

उत्सृज्य दमयन्तीं तु नलो राजा विशांपते ।
ददर्श दावं दह्यन्तं महान्तं गहने वने ॥ १ ॥
तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित् ।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥ २ ॥

मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् ।
ददर्श नागराजानं शयानं कुण्डलीकृतम् ॥ ३ ॥
स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा ।
उवाच मां विद्धि राजन्नागं कर्कोटकं नृप ॥ ४ ॥
मया प्रलब्धो महर्षिर्नारदः स महातपाः ।
तेन मन्युपरीतेन शप्तोस्मि मनुजाधिप ॥ ५ ॥
तिष्ठ त्वं स्थावर इव यावदेव नलः क्वचित् ।
इतो नेता हि तत्र त्वं शापान्मोक्ष्यसि मत्कृतात् ॥ ६ ॥
तस्य शापान्न शक्तोस्मि पदाद्विचलितुं पदम् ।
उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् ॥ ७ ॥
सखा च ते भविष्यामि मत्समो नास्ति पन्नगः ।
लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् ॥ ८ ॥
एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः ।
तं गृहीत्वा नलः प्रायाद्देशं दावविवर्जितम् ॥ ९ ॥
आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना ।
उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोब्रवीत् ॥ १० ॥
पदानि गणयन्गच्छ स्वानि नैषध कानिचित् ।
तत्र तेहं माहाबाहो श्रेयो धास्यामि यत्परम् ॥ ११ ॥
ततः संख्यातुमारब्धमदशद्दशमे पदे ।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ॥ १२

स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः ।
स्वरूपधारिणं नागं ददर्श च महीपतिः ॥ १३ ॥
ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत् ।
मया तेन्तर्हितं रूपं न त्वां विद्युर्जना इति ॥ १४ ॥
यत्कृते चासि निकृतो दुःखेन महता नल ।
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति ॥ १५ ॥
विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति ।
तावत्त्वयि महाराज दुःखं वै स निवत्स्यति ॥ १६ ॥
अनागा येन निकृतस्त्वमनर्हो जनाधिप ।
क्रोधादसूययित्वा तं रक्षा मे भवतः कृता ॥ १७ ॥
न ते भयं नरव्याघ्र दंष्ट्रिभ्यः शत्रुतोपि वा ।
ब्रह्मर्षिभ्यश्च भविता मत्प्रसादान्नराधिप ॥ १८ ॥
राजन्विषनिमित्ता च न ते पीडा भविष्यति ।
संग्रामेषु च राजेन्द्र शश्वज्जयमवाप्स्यसि ॥ १९ ॥
गच्छ राजन्नितः सूतो बाहुकोहमिति ब्रुवन् ।
समीपमृतुपर्णस्य स हि वेदाक्षनैपुणम् ॥ २० ॥
स तेक्षहृदयं दाता राजाश्वहृदयेन वै ।
इक्ष्वाकुकुलजः श्रीमान्मित्रं चैव भविष्यति ॥ २१ ॥
भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा ।
समेष्यसि च दारैस्त्वं मा स्म शोके मनः कृथाः ॥ २२ ॥

स्वरूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ।
संस्मर्तव्यस्तदा तेहं वासश्चेदं निवासयेः ॥ २३ ॥
अनेन वाससा छन्नः स्वरूपं प्रतिपत्स्यसे ।
इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा ॥ २४ ॥
एवं नलं च संदिश्य वासो दत्त्वा च कौरव ।
नागराजस्ततो राजंस्तत्रैवान्तरधीयत ॥ २५ ॥

॥ इति नलोपाख्याने चतुर्दशोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः ।
ऋतुपर्णस्य नगरं प्राविशद्दशमेहनि ॥ १ ॥
स राजानमुपातिष्ठद्बाहुकोहमिति ब्रुवन् ।
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः ॥ २ ॥
अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च ।
अन्नसंस्कारमपि च जानाम्यन्यैर्विशेषतः ॥ ३ ॥
यानि शिल्पानि लोकेस्मिन्यच्चैवान्यत्सुदुष्करम् ।
सर्वं यतिष्ये तत्कर्तुमृतुपर्ण भरस्व माम् ॥ ४ ॥

## ॥ ऋतुपर्ण उवाच ॥

वस बाहुक भद्रं ते सर्वमेतत्करिष्यसि ।
शीघ्रयाने सदा बुद्धिर्ध्रियते मे विशेषतः ॥ ५ ॥
स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम ।
भवेयुरश्वाध्यक्षोसि वेतनं ते शतं शताः ॥ ६ ॥
त्वामुपस्थास्यतश्चैव नित्यं वार्ष्णेयजीवलौ ।
एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुक ॥ ७ ॥

## ॥ बृहदश्व उवाच ॥

एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः ।
ऋतुपर्णस्य नगरे सहवार्ष्णेयजीवलः ॥ ८ ॥
स वै तत्रावसद्राजा वैदर्भीमनुचिन्तयन् ।
सायंसायं सदा चेमं श्लोकमेकं जगाद ह ॥ ९ ॥
क्व नु सा क्षुत्पिपासार्त्ता श्रान्ता शेते तपस्विनी ।
स्मरन्ती तस्य मन्दस्य कं वासाद्योपतिष्ठति ॥ १० ॥
एवं ब्रुवन्तं राजानं निशायां जीवलोब्रवीत् ।
कामेनां शोचसे नित्यं श्रोतुमिच्छामि बाहुक ॥ ११ ॥
तमुवाच नलो राजा मन्दप्रज्ञस्य कस्यचित् ।
आसीद्बहुमता नारी तस्या दृढतरं वचः ॥ १२ ॥

स वै केनचिदर्थेन तया मन्दो व्ययुज्यत ।
विप्रयुक्तः स मन्दात्मा भ्रमत्यसुखपीडितः ॥ १३ ॥
दह्यमानः स शोकेन दिवारात्रमतन्द्रितः ।
निशाकाले स्मरंस्तस्याः श्लोकमेकं स्म गायति ॥ १४ ॥
स विभ्रमन्महीं सर्वां क्वचिदासाद्य किंचन ।
वसत्यनर्हस्तद्दुःखं पुनरेवानुसंस्मरन् ॥ १५ ॥
सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने ।
त्यक्ता तेनाल्पपुण्येन दुष्करं यदि जीवति ॥ १६ ॥
एका बालानभिज्ञा च मार्गाणामतथोचिता ।
क्षुत्पिपासापरीताङ्गी दुष्करं यदि जीवति ॥ १७ ॥
इत्येवं नैषधो राजा दमयन्तीमनुस्मरन् ।
अज्ञातवासं न्यवसद्राज्ञस्तस्य निवेशने ॥ १८ ॥

॥ इति नलोपाख्याने पञ्चदशोऽध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते ।
द्विजान्प्रस्थापयामास नलदर्शनकाङ्क्षया ॥ १ ॥
संदिदेश च तान्भीमो वसु दत्त्वा च पुष्कलम् ।
[illegible]वं नलं यूयं दमयन्तीं च मे सुताम् ॥ २ ॥

गवां सहस्रं दास्यामि यो वस्तावानयिष्यति ।
अग्रहारांश्च दास्यामि ग्रामं नगरसंमितम् ॥ ३ ॥
न चेच्छक्याविहानेतुं दमयन्ती नलोपि वा ।
ज्ञातमात्रेपि दास्यामि गवां दशशतं धनम् ॥ ४ ॥
इयुक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतो दिशम् ।
नैव क्वापि प्रपश्यन्ति नलं वा भीमपुत्रिकाम् ॥ ५ ॥
ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ।
विचिन्वानोथ वैदर्भीमपश्यद्राजवेश्मनि ॥ ६ ॥
पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम् ।
मन्दं प्रख्यायमानेन रूपेणाप्रतिमेन ताम् ॥ ७ ॥
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास भैमीति कारणैरुपपादयन् ॥ ८ ॥

## ॥ सुदेव उवाच ॥

यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना ।
कृतार्थोस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियम् ॥ ९ ॥
पूर्णचन्द्रनिभां श्यामां चारुवृत्तपयोधराम् ।
कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः ॥ १० ॥
पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम् ।
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव ॥ ११ ॥

विध्वस्तपर्णकमलां वित्रासितविहंगमाम् ।
हस्तिहस्तपरामृष्टां व्याकुलामिव पद्मिनीम् ॥ १२ ॥
रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम् ।
चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् ॥ १३ ॥
कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च ।
देहं धारयतीं दीनां भर्तृदर्शनकाङ्क्षया ॥ १४ ॥
भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।
एषा हि रहिता तेन शोभमाना न शोभते ॥ १५ ॥
दुष्करं कुरुतेऽत्यन्तं हीनो यदनया नलः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ॥ १६ ॥
इमामसितकेशान्तां शतपत्रायतेक्षणाम् ।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः ॥ १७ ॥
कदा नु खलु दुःखस्य पारं यास्यति वै शुभा ।
भर्तुः समागमात्साध्वी रोहिणी शशिनो यथा ॥ १८ ॥
अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति ।
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वा च मेदिनीम् ॥ १९ ॥
तुल्यशीलवयोयुक्तां तुल्याभिजनसंवृताम् ।
नैषधोऽर्हति वैदर्भीं तं चेयमसितेक्षणा ॥ २० ॥
युक्तं तस्याप्रमेयस्य वीर्यसत्त्ववतो मया ।
समाश्वासयितुं भार्यां पतिदर्शनलालसाम् ॥ २१ ॥

अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टपूर्वां दुःखस्य दुःखार्त्तां ध्यानतत्पराम् ॥ २२ ॥

## ॥ बृहदश्व उवाच ॥

एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम् ।
उपागम्य ततो भैमीं सुदेवो ब्राह्मणोब्रवीत् ॥ २३ ॥
अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा ।
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ॥ २४ ॥
कुशली ते पिता राज्ञि जननी भ्रातरश्च ते ।
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च तौ ॥ २५ ॥
त्वत्कृते बन्धुवर्गाश्च गत[illegible]वासते ।
अन्वेष्टारो ब्राह्मणाश्च भ्रमा[illegible] शतशो महीम् ॥ २६ ॥
अभिज्ञाय सुदेवं तं दमयन्ती युधिष्ठिर ।
पर्यपृच्छत तान्सर्वान्क्रमेण सुहृदः स्वकान् ॥ २७ ॥
रुरोद च भृशं राजन्वैदर्भी शोककर्शिता ।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ॥ २८ ॥
ततो रुदन्तीं तां दृष्ट्वा सुनन्दा शोककर्शिताम् ।
सुदेवेन सहैकान्ते कथयन्तीं च भारत ॥ २९ ॥
जनित्र्याः कथयामास सैरन्ध्री रुदते भृशम् ।
ब्राह्मणेन सहागम्य तां वेद यदि मन्यसे ॥ ३० ॥

अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात्तदा ।
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत् ॥ ३१ ॥
ततः सुदेवमानाय्य राजमाता विशांपते ।
पप्रच्छ भार्या कस्येयं सुता वा कस्य भाविनी ॥ ३२ ॥
कथं च भ्रष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना ।
त्वया च विदिता विप्र कथमेवंगता सती ॥ ३३ ॥
एतदिच्छाम्यहं श्रोतुं त्वत्तः सर्वमशेषतः ।
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्या देवरूपिणीम् ॥ ३४ ॥
एवमुक्तस्तया राजन्सुदेवो द्विजसत्तमः ।
सुखोपविष्ट आचष्टे दमयन्त्या यथातथम् ॥ ३५ ॥

॥ इति नलोपाख्याने षोडशोऽध्यायः ॥

## ॥ सुदेव उवाच ॥

विदर्भराजो धर्मात्मा भीमो नाम महाद्युतिः ।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता ॥ १ ॥
राजा तु नैषधो नाम वीरसेनसुतो नलः ।
भार्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः ॥ २ ॥
स वै द्यूते जितो भ्रात्रा हृतराज्यो महीपतिः ।
दमयन्त्या गतः सार्धं न प्राज्ञायत कर्हिचित् ॥ ३ ॥

ते वयं दमयन्त्यर्थं चरामः पृथिवीमिमाम् ।
सेयमासादिता बाला तव पुत्रनिवेशने ॥ ४ ॥
अस्या ह्येष भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः ।
श्यामायाः पद्मसंकाशो लक्षितोन्तर्हितो मया ॥ ५ ॥
मलेन संवृतो ह्यस्याश्छन्नोभ्रेणेव चन्द्रमाः ।
चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः ॥ ६ ॥
न चास्या नश्यते रूपं वपुर्मलसमाचितम् ।
असंस्कृतमभिव्यक्तं भाति काञ्चनसंनिभम् ॥ ७ ॥
अनेन वपुषा बाला पिप्लुनानेन सूचिता ।
लक्षितेयं मया देवी निभृतोग्निरिवोष्मणा ॥ ८ ॥

## ॥ बृहदश्व उवाच ॥

तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशांपते ।
सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलम् ॥ ९ ॥
स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत ।
दमयन्त्यास्तदा व्यभ्रे नभसीव निशाकरः ॥ १० ॥
पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत ।
रुदन्त्यौ तां परिष्वज्य मुहूर्तमिव तस्थतुः ॥ ११ ॥
उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ।
भगिन्या दुहिता मेसि पिप्लुनानेन सूचिता ॥ १२ ॥

अहं च तव माता च राज्ञस्तस्य महात्मनः ।
सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने ॥ १३ ॥
भीमस्य राज्ञः सा दत्ता वीरबाहोरहं पुनः ।
त्वं तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे ॥ १४ ॥
यथैव ते पितुर्गेहं तथैव मम भाविनि ।
यथैव च ममैश्वर्यं दमयन्ति तथा तव ॥ १५ ॥
तां प्रहृष्टेन मनसा दमयन्ती विशांपते ।
प्रणम्य मातुर्भगिनीमिदं वचनमब्रवीत् ॥ १६ ॥
अज्ञायमानापि सती सुखमस्म्युषिता त्वयि ।
सर्वकामैः सुविहिता रक्ष्यमाणा सदा त्वया ॥ १७ ॥
सुखात्सुखतरो वासो भविष्यति न संशयः ।
चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि ॥ १८ ॥
दारकौ च हि मे नीतौ वसतस्तत्र बालकौ ।
पित्रा विहीनौ शोकार्त्तौ मया चैव कथं नु तौ ॥ १९ ॥
यदि चापि प्रियं किंचिन्मयि कर्तुमिहेच्छसि ।
विदर्भान्यातुमिच्छामि शीघ्रं मे यानमादिश ॥ २० ॥
बाढमित्येव तामुक्त्वा हृष्टा मातृष्वसा नृप ।
गुप्तां बलेन महता पुत्रस्यानुमते ततः ॥ २१ ॥
प्रास्थापयद्राजमाता श्रीमतीं नरवाहिना ।
यानेन भरतश्रेष्ठ ह्यन्नपानपरिच्छदाम् ॥ २२ ।

ततः सा न चिरादेव विदर्भानगमत्पुनः ।
तां तु बन्धुजनः सर्वः प्रहृष्टः समपूजयत् ॥ २३ ॥
सर्वान्कुशलिनो दृष्ट्वा बान्धवान्दारकौ च तौ ।
मातरं पितरं चोभौ सर्वं चैव सखीजनम् ॥ २४ ॥
देवताः पूजयामास ब्राह्मणांश्च यशस्विनी ।
परेण विधिना देवी दमयन्ती विशांपते ॥ २५ ॥
अतर्पयत्सुदेवं च गोसहस्रेण पार्थिवः ।
प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च ॥ २६ ॥
सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भाविनी ।
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ॥ २७ ॥

॥ दमयन्त्युवाच ॥

मां चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमि ते ।
नरवीरस्य चैतस्य नलस्यानयने यत ॥ २८ ॥
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ।
बाष्पेणापिहिता राजन्नोत्तरं किंचिदब्रवीत् ॥ २९ ॥
तदवस्थां तु तां दृष्ट्वा सर्वमन्तःपुरं तदा ।
हाहाभूतमतीवासीद्भृशं च प्ररुरोद ह ॥ ३० ॥
ततो भीमं महाराजं भार्या वचनमब्रवीत् ।
दमयन्ती तव सुता भर्तारमनुशोचति ॥ ३१ ॥
अपकृष्य च लज्जां सा स्वयमुक्तवती नृप ।
प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य मार्गणे ॥ ३२ ॥

तथा प्रदेशितो राजा ब्राह्मणान्वशवर्तिनः ।
प्रास्थापयद्दिशः सर्वा यतध्वं नलमार्गणे ॥ ३३ ॥
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा ।
दमयन्तीमथो सृत्वा प्रस्थिताः स्मेत्यथाब्रुवन् ॥ ३४ ॥
अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः ।
ब्रूयास्त जनसंसत्सु तत्रतत्र पुनःपुनः ॥ ३५ ॥
क्व नु त्वं कितव च्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ३६ ॥
सा वै यथा समादिष्टा तथास्ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥ ३७ ॥
तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं वदस्व च ॥ ३८ ॥
एवमन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥ ३९ ॥
एवं ब्रुवाणान्यदि वः प्रतिब्रूयाद्धि कश्चन ।
स नरः सर्वथा ज्ञेयः कश्चासौ क्व च वर्तते ॥ ४० ॥
यश्चैवं वचनं श्रुत्वा ब्रूयात्प्रतिवचो नरः ।
तदादाय वचस्तस्य ममावेद्यं द्विजोत्तमाः ॥ ४१ ॥
यथा च वो न जानीयाद्ब्रुवतो मम शासनात् ।
पुनरागमनं चैव तथा कार्यमतन्द्रितैः ॥ ४२ ॥

यदि वासौ समृद्धः स्याद्यदि वाप्यधनो भवेत् ।
यदि वाप्यर्थकामः स्याज्ज्ञेयं तस्य चिकीर्षितम् ॥ ४३ ॥
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतो दिशः ।
नलं मृगयितुं राजंस्तदा व्यसनिनं तथा ॥ ४४ ॥
ते पुराणि सराष्ट्राणि ग्रामान्घोषांस्तथाश्रमान् ।
अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः ॥ ४५ ॥
तच्च वाक्यं तथा सर्वे तत्रतत्र विशांपते ।
श्रावयांचक्रिरे विप्रा दमयन्त्या यथेरितम् ॥ ४६ ॥

॥ इति नलोपाख्याने सप्तदशोऽध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥ १ ॥
नैषधं मृगयाणेन दमयन्ति मया नलम् ।
अयोध्यां नगरीं गत्वा भाङ्गासुरिरुपास्थितः ॥ २ ॥
श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।
ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ॥ ३ ॥
तच्छ्रुत्वा नाब्रवीत्किंचिदृतुपर्णो नराधिपः ।
न च पारिषदः कश्चिद्भाष्यमाणो मयासकृत् ॥ ४ ॥

अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ।
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ॥ ५ ॥
सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः ।
शीघ्रयानेषु कुशलो मिष्टकर्ता च भोजने ॥ ६ ॥
स विनिःश्वस्य बहुशो रुदित्वा च पुनःपुनः ।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ ७ ॥
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ॥ ८ ॥
रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ ९ ॥
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ १० ॥
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ ११ ॥
तस्य तद्वचनं श्रुत्वा त्वरितोहमिहागतः ।
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय ॥ १२ ॥
एतच्छ्रुत्वाश्रुपूर्णाक्षी पर्णादस्य विशांपते ।
दमयन्ती रहोभ्येत्य मातरं प्रत्यभाषत ॥ १३ ॥
अयमर्थो न संवेद्यो भीमे मातः कथंचन ।
त्वत्संनिधौ नियोक्ष्येहं सुदेवं द्विजसत्तमम् ॥ १४ ॥

यथा न नृपतिर्भीमः प्रतिपद्येत मे मतिम् ।
तथा त्वया प्रयत्तव्यं मम चेत्प्रियमिच्छसि ॥ १५ ॥
यथा चाहं समानीता सुदेवेनाशु बान्धवान् ।
तेनैव मङ्गलेनाशु सुदेवो यातु माचिरम् ॥ १६ ॥
विश्रान्तं तु ततः पश्चात्पर्णादं द्विजसत्तमम् ।
अर्चयामास वैदर्भी धनेनातीव भाविनी ॥ १७ ॥

॥ दमयन्त्युवाच ॥

त्वया हि मे बहु कृतं यथा नान्यः करिष्यति ।
यद्भर्त्राहं समेष्यामि शीघ्रमेव द्विजोत्तम ॥ १८ ॥

॥ बृहदश्व उवाच ॥

स एवमुक्तोथाश्वास्य आशीर्वादैः समङ्गलैः ।
गृहानुपययौ चापि कृतार्थः सुमहामनाः ॥ १९ ॥
ततः सुदेवमाभाष्य दमयन्ती युधिष्ठिर ।
अब्रवीत्संनिधौ मातुर्दुःखशोकसमन्विता ॥ २० ॥
गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि संपतन्निव कामगः ॥ २१ ॥
आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २२ ॥

तथा च गणितः कालः श्वोभूते स भविष्यति ।
यदि संभावनीयस्ते गच्छ शीघ्रमरिंदम ॥ २३ ॥
सूर्योदये द्वितीयं सा भर्तारं वरयिष्यति ।
न हि स ज्ञायते वीरो नलो जीवति वा न वा ॥ २४ ॥
एवं तया यथोक्तो वै गत्वा राजानमब्रवीत् ।
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा ॥ २५ ॥

॥ इति नलोपाख्यानेऽष्टादशोऽध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः ।
सान्त्वयञ्श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ॥ १ ॥
विदर्भान्यातुमिच्छामि दमयन्त्याः स्वयंवरम् ।
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक ॥ २ ॥
एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह ।
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः ॥ ३ ॥
दमयन्ती वदेदेतत्कुर्याद्दुःखेन मोहिता ।
अस्मदर्थे भवेद्वायमुपायश्चिन्तितो महान् ॥ ४ ॥
नृशंसं बत वैदर्भी कर्तुकामा तपस्विनी ।
मया क्षुद्रेण निकृता कृपणा पापबुद्धिना ॥ ५ ॥

स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ।
स्यादेवमपि कुर्यात्सा विवासाद्गतसौहृदा ॥ ६ ॥
मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ।
नैवं सा कर्हिचित्कुर्यात्सापत्या च विशेषतः ॥ ७ ॥
यदत्र सत्यं वासत्यं गत्वा वेत्स्यामि निश्चयम् ।
ऋतुपर्णस्य वै काममात्मार्थं च करोम्यहम् ॥ ८ ॥
इति निश्चित्य मनसा बाहुको दीनमानसः ।
कृताञ्जलिरुवाचेदमृतुपर्णं नराधिपम् ॥ ९ ॥
प्रतिजानामि ते वाक्यं गमिष्यामि नराधिप ।
एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ॥ १० ॥
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ।
अश्वशालामुपागम्य भाङ्गासुरिनृपाज्ञया ॥ ११ ॥
स त्वर्यमाणो बहुश ऋतुपर्णेन बाहुकः ।
अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ॥ १२ ॥
तेजोबलसमायुक्तान्कुलशीलसमन्वितान् ।
वर्जितांल्लक्षणैर्हीनैः पृथुप्रोथान्महाहनून् ॥ १३ ॥
दृष्ट्वा तानब्रवीद्राजा किंचित्कोपसमन्वितः ।
किमिदं प्रार्थितं कर्तुं प्रलब्धव्या न ते वयम् ॥ १४ ॥
कथमल्पबलप्राणा वक्ष्यन्तीमे हया मम ।
महदध्वानमपि च गन्तव्यं कथमीदृशैः ॥ १५ ॥

## ॥ बाहुक उवाच ॥

एते हया गमिष्यन्ति विदर्भान्नात्र संशयः ।
यानन्यान्मन्यसे राजन्ब्रूहि तान्योजयामि ते ॥ १६ ॥

## ॥ ऋतुपर्ण उवाच ॥

त्वमेव हयतत्त्वज्ञः कुशलो ह्यसि बाहुक ।
यान्मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय ॥ १७ ॥

## ॥ बृहदश्व उवाच ॥

ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् ।
योजयामास कुशलो जवयुक्तान्रथे नलः ॥ १८ ॥
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः ।
अथ पर्यपतन्भूमौ जानुभिस्ते हयोत्तमाः ॥ १९ ॥
ततो नरवरः श्रीमान्नलो राजा विशांपते ।
सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान् ॥ २० ॥
रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः ।
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम् ॥ २१ ॥
ते नोद्यमाना विधिवद्बाहुकेन हयोत्तमाः ।
समुत्पेतुरथाकाशं रथिनं मोहयन्निव ॥ २२ ॥

तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः ।
अयोध्याधिपतिः श्रीमान्विस्मयं परमं ययौ ॥ २३ ॥
रथघोषं तु तं श्रुत्वा हयसंग्रहणं च तत् ।
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् ॥ २४ ॥
किं नु स्यान्मातलिरयं देवराजस्य सारथिः ।
तथा तल्लक्षणं वीरे बाहुके दृश्यते महत् ॥ २५ ॥
उताहोस्विद्भवेद्राजा नलः परपुरंजयः ।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च ॥ २६ ॥
अपि चेदं वयस्तुल्यं बाहुकस्य नलस्य च ।
भवेत्तु मतिभेदो मे गात्रवैरूप्यतां प्रति ॥ २७ ॥
एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत् ।
हृदयेन महाराज पुण्यश्लोकस्य सारथिः ॥ २८ ॥
ऋतुपर्णस्तु राजेन्द्रो बाहुकस्य हयज्ञताम् ।
परं यत्नं च संप्रेक्ष्य परां मुदमवाप ह ॥ २९ ॥

॥ इति नलोपाख्याने एकोनविंशोऽध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

तथा प्रयाते तु रथे तदा भाङ्गासुरिर्नृपः ।
उत्तरीयमथोपश्यद्भ्रष्टं परपुरंजयः ॥ १ ॥

ततः स त्वरमाणस्तु पटे निपतिते तदा ।
ग्रहीष्यामीति तं राजा नलमाह महामनाः ॥ २ ॥
नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव ।
योजनं समतिक्रान्तो नाहर्तुं शक्यते पुनः ॥ ३ ॥
एवमुक्तो नलेनाथ तदा भाङ्गासुरिर्नृपः ।
आससाद वने राजन्फलवन्तं बिभीतकम् ॥ ४ ॥
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ।
ममापि सूत पश्य त्वं संख्याने परमं बलम् ॥ ५ ॥
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित् ॥ ६ ॥
वृक्षेऽस्मिन्यानि पर्णानि फलान्यपि च बाहुक ।
पतितानि च यान्यत्र तत्रैकमधिकं शतम् ॥ ७ ॥
ततो रथमवस्थाप्य राजानं बाहुकोऽब्रवीत् ।
परोक्षमिव मे राजन्कत्थसे शत्रुकर्षण ॥ ८ ॥
प्रत्यक्षं ते महाराज शातयिष्ये बिभीतकम् ।
अहं हि नाभिजानामि भवेदेवं तवेति च ॥ ९ ॥
संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप ।
मुहूर्तमपि वार्ष्णेयो रश्मीन्यच्छतु वाजिनाम् ॥ १० ॥
तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुम् ।
बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः ॥ ११ ॥

प्रतीक्षस्व मुहूर्तं त्वमथवा त्वरते भवान् ।
एष याति शिवः पन्था याहि वार्ष्णेयसारथिः ॥ १२ ॥
अब्रवीदृतुपर्णस्तु सान्त्वयन्कुरुनन्दन ।
त्वमेव यन्ता नान्योस्ति पृथिव्यामपि बाहुक ॥ १३ ॥
त्वत्कृते यातुमिच्छामि विदर्भान्हयकोविद ।
शरणं त्वां प्रपन्नोस्मि न विघ्नं कर्तुमर्हसि ॥ १४ ॥
कामं च ते करिष्यामि यन्मां वक्ष्यसि बाहुक ।
विदर्भान्यदि यात्वाद्य सूर्यं दर्शयितासि मे ॥ १५ ॥
अथाब्रवीद्बाहुकस्तं संख्याय च बिभीतकम् ।
ततो विदर्भान्यास्यामि कुरुष्वैवं वचो मम ॥ १६ ॥
अकाम इव तं राजा गणयस्वेत्युवाच ह ।
सोवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् ॥ १७ ॥
ततः स विस्मयाविष्टो राजानमिदमब्रवीत् ।
गणयित्वा यथोक्तानि तावन्त्येव फलानि च ॥ १८ ॥
अत्यद्भुतमिदं राजन्दृष्टवानस्मि ते बलम् ।
श्रोतुमिच्छामि तां विद्यां यथैतज्ज्ञायते नृप ॥ १९ ॥
तमुवाच ततो राजा त्वरितो गमने नृपः ।
विद्धचक्षहृदयज्ञं मां संख्याने च विशारदम् ॥ २० ॥

बाहुकस्तमुवाचाथ देहि विद्यामिमां मम ।
मत्तोपि चाश्वहृदयं गृहाण पुरुषर्षभ ॥ २१ ॥
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ।
हयज्ञानस्य लोभाच्च तथेत्येवाब्रवीद्वचः ॥ २२ ॥
यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परम् ।
निक्षेपो मेश्वहृदयं त्वयि तिष्ठति बाहुक ॥ २३ ॥
तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः ।
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वमन् ॥ २४ ॥
ततो विषविमुक्तात्मा स्वं रूपमकरोत्कलिः ।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ॥ २५ ॥
तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः ।
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम् ॥ २६ ॥
इन्द्रसेनस्य जननी कुपिता माशपत्पुरा ।
यदा त्वया परित्यक्ता ततोहं भृशपीडितः ॥ २७ ॥
अवसं त्वयि राजेन्द्र सुदुःखमपराजित ।
विषेण नागराजस्य दह्यमानो दिवानिशम् ॥ २८ ॥
शरणं त्वां प्रपन्नोस्मि शृणु चेदं वचो मम ।
ये च त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः ॥ २९ ॥
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ।
भयार्त्तं शरणं यातं यदि मां त्वं न शप्स्यसे ॥ ३० ॥

एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः ।
कलिस्त्वन्येन नादृश्यत्कथयन्नैषधेन वै ॥ ३१ ॥
ततो गतज्वरो राजा नैषधः परवीरहा ।
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः ॥ ३२ ॥
हयोत्तमानुत्पततो द्विजानिव पुनःपुनः ।
नलः संनोदयामास प्रहृष्टेनान्तरात्मना ॥ ३३ ॥
विदर्भाभिमुखो राजा प्रययौ स महायशाः ।
नले तु समतिक्रान्ते कलिरप्यगमद्गृहम् ॥ ३४ ॥
ततो गतज्वरो राजा नलोभूत्पृथिवीपतिः ।
विमुक्तः कलिना राजन्रूपमात्रवियोजितः ॥ ३५ ॥

॥ इति नलोपाख्याने विंशतितमोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

ततो विदर्भान्संप्राप्तं सायाह्ने सत्यविक्रमम् ।
ऋतुपर्णं जना राज्ञे भीमाय प्रत्यवेदयन् ॥ १ ॥
स भीमवचनाद्राजा कुण्डिनं प्राविशत्पुरम् ।
नादयन्रथघोषेण सर्वाः सविदिशो दिशः ॥ २ ॥
ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः ।
श्रुत्वा तु समहृष्यन्त पुरेव नलसंनिधौ ॥ ३ ॥

दमयन्ती तु शुश्राव रथघोषं नलस्य तम् ।
यथा मेघस्य नदतो गम्भीरं जलदागमे ॥ ४ ॥
नलेन संगृहीतेषु पुरेव नलवाजिषु ।
सदृशं हयनिर्घोषं मेने भैमी तथा हयाः ॥ ५ ॥
प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः ।
हयाश्च शुश्रुवुस्तस्य रथघोषं महीपतेः ॥ ६ ॥
ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा ।
प्रणेदुरुन्मुखा राजन्मेघनाद इवोत्सुकाः ॥ ७ ॥

॥ दमयन्त्युवाच ॥

यथासौ रथनिर्घोषः पूरयन्निव मेदिनीम् ।
ममाह्लादयते चेतो नल एष महीपतिः ॥ ८ ॥
अद्य चन्द्राभवक्त्रं तं न पश्यामि नलं यदि ।
असंख्येयगुणं वीरं विनङ्क्ष्यामि न संशयः ॥ ९ ॥
यदि चैतस्य वीरस्य बाह्वोर्नाद्याहमन्तरम् ।
प्रविशामि सुखस्पर्शं न भविष्याम्यसंशयम् ॥ १० ॥
यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ।
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ॥ ११ ॥
न स्मराम्यनृतं किंचिन्न स्मराम्यपकारताम् ।
न च पर्युषितं वाक्यं स्वैरेष्वपि कदाचन ॥ १२ ॥

प्रभुः क्षमावान्वीरश्च दाता चाभ्यधिको नृपः ।
रहोनीचानुवर्ती च क्लीबवन्मम नैषधः ॥ १३ ॥
गुणांस्तस्य स्मरन्त्या मे तत्पराया दिवानिशम् ।
हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम् ॥ १४ ॥

## ॥ बृहदश्व उवाच ॥

एवं विलपमाना सा नष्टसंज्ञेव भारत ।
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ॥ १५ ॥
ततो मध्यमकक्षायां ददर्श रथमास्थितम् ।
ऋतुपर्णं महीपालं सहवार्ष्णेयबाहुकम् ॥ १६ ॥
ततोवतीर्य वार्ष्णेयो बाहुकश्च रथोत्तमात् ।
हयांस्तानवमुच्याथ स्थापयामास वै रथम् ॥ १७ ॥
सोवतीर्य रथोपस्थादृतुपर्णो नराधिपः ।
उपतस्थे महाराजं भीमं भीमपराक्रमम् ॥ १८ ॥
तं भीमः प्रतिजग्राह पूजया परया ततः ।
अकस्मात्सहसा प्राप्तं स्त्रीमन्त्रं न स्म विन्दति ॥ १९ ॥
ऋतुपर्णोपि राजा स धीमान्सत्यपराक्रमः ।
राजानं राजपुत्रं वा न स्म पश्यति कंचन ॥ २० ॥
स तेन पूजितो राज्ञा ऋतुपर्णो नराधिपः ।
किं कार्यं स्वागतं तेस्तु राज्ञा पृष्टः स भारत ॥ २१ ॥

ततो विगणयन्राजा मनसा कोसलाधिपः ।
आगतोस्मीत्युवाचैनं भवन्तमभिवादकः ॥ २२ ॥
राजाऽपि च स्मयन्भीमो मनसा समचिन्तयत् ।
अल्पकार्यं विनिर्दिष्टं तस्यागमनकारणम् ॥ २३ ॥
नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्जयत् ।
विश्राम्यतामित्युवाच क्लान्तोसीति पुनःपुनः ॥ २४ ॥
स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः ।
राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत् ॥ २५ ॥
ऋतुपर्णे गते राजन्वार्ष्णेयसहिते नृपे ।
बाहुको रथमादाय रथशालामुपागमत् ॥ २६ ॥
सं मोचयित्वा तानश्वानुपचर्य च शास्त्रतः ।
स्वयं चैतान्समाश्वास्य रथोपस्थ उपाविशत् ॥ २७ ॥
दमयन्ती तु शोकार्त्ता दृष्ट्वा भाङ्गासुरिं नृपम् ।
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम् ॥ २८ ॥
चिन्तयामास वैदर्भी कस्यैष रथनिस्वनः ।
नलस्येव महानासीन्न च पश्यामि नैषधम् ॥ २९ ॥
वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता ।
तेनाद्य रथनिर्घोषो नलस्येव महानभूत् ॥ ३० ॥
अहोस्विदृतुपर्णोपि यथा राजा नलस्तथा ।
तथायं रथनिर्घोषो नैषधस्येव लक्ष्यते ॥ ३१ ॥

एवं सा तर्कयित्वा तु दमयन्ती विशांपते ।
दूतीं प्रस्थापयामास नैषधान्वेषणे शुभा ॥ ३२ ॥

॥ इति नलोपाख्याने एकविंशतितमोध्यायः ॥

---

## ॥ दमयन्त्युवाच ॥

गच्छ केशिनि जानीहि क एष रथवाहकः ।
उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः ॥ १ ॥
अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता ।
पृच्छेथाः पुरुषं ह्येनं यथातत्त्वमनिन्दिते ॥ २ ॥
अत्र मे महती शङ्का भवेदेष नलो नृपः ।
यथा च मनसस्तुष्टिर्हृदयस्य च निर्वृतिः ॥ ३ ॥
ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा ।
प्रतिवाक्यं च सुश्रोणि बुध्येथास्त्वमनिन्दिते ॥ ४ ॥

## ॥ बृहदश्व उवाच ॥

ततः समाहिता गत्वा दूती बाहुकमब्रवीत् ।
दमयन्त्यपि कल्याणी प्रासादस्था ह्युपैक्षत ॥ ५
स्वागतं ते मनुष्येन्द्र कुशलं ते ब्रवीम्यहम् ।
दमयन्त्या वचः साधु निबोध पुरुषर्षभ ॥ ६ ॥

कदा वै प्रस्थिता यूयं किमर्थमिह चागताः ।
तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति ॥ ७ ॥

## ॥ बाहुक उवाच ॥

श्रुतः स्वयंवरो राज्ञा कौसल्येन महात्मना ।
द्वितीयो दमयन्त्या वै भविता श्व इति द्विजात् ॥ ८ ॥
श्रुत्वैतत्प्रस्थितो राजा शतयोजनयायिभिः ।
हयैर्वातजवैर्मुख्यैरहमस्य च सारथिः ॥ ९ ॥

## ॥ केशिन्युवाच ॥

अथ योसौ तृतीयो वः स कुतः कस्य वा पुनः ।
त्वं च कस्य कथं चेदं त्वयि कर्म समाहितम् ॥ १० ॥

## ॥ बाहुक उवाच ॥

पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः ।
स नले प्रद्रुते भद्रे भाङ्गासुरिमुपस्थितः ॥ ११ ॥
अहमप्यश्वकुशलः सूतत्वे च प्रतिष्ठितः ।
ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम् ॥ १२ ॥

## ॥ केशिन्युवाच ॥

अथ जानाति वार्ष्णेयः क्व नु राजा नलो गतः ।
कथं च त्वयि चैतेन कथितं स्यात्तु बाहुक ॥ १३ ॥

## ॥ बाहुक उवाच ॥

इहैव पुत्रौ निक्षिप्य नलस्याशुभकर्मणः ।
गतस्ततो यथाकामं नैष जानाति नैषधम् ॥ १४ ॥
न चान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि ।
गूढश्चरति लोकेस्मिन्नष्टरूपो महीपतिः ॥ १५ ॥
आत्मैव तु नलं वेत्ति या चास्य तदनन्तरा ।
न हि वै स्वानि लिङ्गानि नलः शंसति कर्हिचित् ॥ १६ ॥

## ॥ केशिन्युवाच ॥

योसावयोध्यां प्रथमं गतवान्ब्राह्मणस्तदा ।
इमानि नारीवाक्यानि कथयानः पुनःपुनः ॥ १७ ॥
क्व नु त्वं कितव च्छित्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ १८ ॥
सा वै यथा समादिष्टा तथास्ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥ १९ ॥

तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं वदस्व च ॥ २० ॥
एतच्छ्रुत्वा प्रतिवचस्तस्य दत्तं त्वया किल ।
यत्पुरा तत्पुनस्त्वत्तो वैदर्भी श्रोतुमिच्छति ॥ २१ ॥

## ॥ बृहदश्व उवाच ॥

एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन ।
हृदयं व्यथितं चासीदश्रुपूर्णे च लोचने ॥ २२ ॥
स निगृह्यात्मनो दुःखं दह्यमानो महीपतिः ।
बाष्पसंदिग्धया वाचा पुनरेवेदमब्रवीत् ॥ २३ ॥
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ॥ २४ ॥
रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ २५ ॥
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ २६ ॥
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ २७ ॥
एवं ब्रुवाणस्तद्वाक्यं नलः परमदुःखितः ।
न बाष्पमशकत्सोढुं प्ररुरोदाथ भारत ॥ २८ ॥

ततः सा केशिनी गत्वा दमयन्त्यै न्यवेदयत् ।
तत्सर्वं कथितं चैव विकारं चैव तस्य तम् ॥ २९ ॥

॥ इति नलोपाख्याने द्वाविंशतितमोऽध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

दमयन्ती तु तच्छ्रुत्वा भृशं शोकपरायणा ।
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत् ॥ १ ॥

गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके ।
तत्र संचेष्टमानस्य लक्षयन्ती विचेष्टितम् । २ ॥

न चास्य प्रतिबन्धेन देयोऽग्निरपि केशिनि ।
याचते न जलं देयं सर्वथा त्वरमाणया ॥ ३ ॥

निमित्तं तत्त्वया दृष्टं बाहुके दैवमानुषम् ।
यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम ॥ ४ ॥

दमयन्त्यैवमुक्ता सा जगामाथ च केशिनी ।
निशम्याथ हयज्ञस्य लिङ्गानि पुनरागमत् ॥ ५ ॥

सा तत्सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत् ।
निमित्तं यत्तया दृष्टं बाहुके दैवमानुषम् ॥ ६ ॥

## ॥ केशिन्युवाच ॥

दृढं शुच्युपचारोसौ न मया मानुषः क्वचित् ।
दृष्टपूर्वः श्रुतो वापि दमयन्ति तथाविधः ॥ ७ ॥
ह्रस्वमासाद्य संचारं नासौ विनमते क्वचित् ।
तं तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखम् ॥ ८ ॥
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः ।
प्रेषितं तत्र राज्ञा तु मांसं बहु च पाशवम् ॥ ९ ॥
तस्य प्रक्षालनार्थाय कुम्भास्तत्रोपकल्पिताः ।
ते तेनावेक्षिताः कुम्भाः पूर्णा एवाभवंस्ततः ॥ १० ॥
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः ।
तृणमुष्टिं समादाय सवितुस्तं समादधत् ॥ ११ ॥
अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः ।
तदद्भुततमं दृष्ट्वा विस्मिताहमिहागता ॥ १२ ॥
अन्यच्च तस्मिन्सुमहदाश्चर्यं लक्षितं मया ।
यदग्निमपि संस्पृश्य नैवासौ दह्यते शुभे ॥ १३ ॥
अतीव चान्यत्सुमहदाश्चर्यं दृष्टवत्यहम् ।
यत्स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः ॥ १४ ॥
मृद्यमानानि पाणिभ्यां तेन पुष्पाणि तान्यथ ।
भूय एव सुगन्धीनि हृषितानि भवन्ति हि ॥ १५ ॥

## ॥ बृहदश्व उवाच ॥

दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् ।
अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम् ॥ १६ ॥
सा शङ्कमाना भर्तारं नलं बाहुकरूपिणम् ।
केशिनीं श्लक्ष्णया वाचा रुदती पुनरब्रवीत् ॥ १७ ॥
पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम् ।
महानसाशृतं मांसं समादायैहि भाविनि ॥ १८ ॥
सा गत्वा बाहुकस्याग्रे तन्मांसमपकृष्य च ।
दमयन्त्यै ततः प्रादात्केशिनी कुरुनन्दन ॥ १९ ॥
सोचिता नलसिद्धस्य मांसस्य बहुशः पुरा ।
प्राश्य मत्वा नलं सूतं प्राक्रोशद्भृशदुःखिता ॥ २० ॥
वैक्लव्यं परमं गत्वा प्रक्षाल्य च मुखं ततः ।
मिथुनं प्रेषयामास केशिन्या सह भारत ॥ २१ ॥
इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः ।
अभिसृत्य ततो राजा परिष्वज्याङ्कमानयत् ॥ २२ ॥
बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ।
भृशं दुःखपरीतात्मा सुस्वरं प्ररुरोद ह ॥ २३ ॥
नैषधो दर्शयित्वा तु विकारमसकृत्तदा ।
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् ॥ २४ ॥

इदं सुसदृशं भद्रे मिथुनं मम पुत्रयोः ।
अतो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम् ॥ २५ ॥
बहुशः संपतन्तीं त्वां जनः शङ्केत दोषतः ।
वयं च देशातिथयो गच्छ भद्रे यथासुखम् ॥ २६ ॥

---

॥ इति नलोपाख्याने त्रयोविंशतितमोध्यायः ॥

## ॥ बृहदश्व उवाच ॥

सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः ।
आगत्य केशिनी क्षिप्रं दमयन्त्यै न्यवेदयत् ॥ १ ॥
दमयन्ती ततो भूयः प्रेषयामास केशिनीम् ।
मातुः सकाशं दुःखार्त्ता नलदर्शनकाङ्क्षया ॥ २ ॥
परीक्षितो मे बहुशो बाहुको नलशङ्कया ।
रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुम् ॥ ३ ॥
स वा प्रवेश्यतां मातर्मां वानुज्ञातुमर्हसि ।
विदितं वाथवा ज्ञातं पितुर्मे संविधीयताम् ॥ ४ ॥
एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत् ।
दुहितुस्तमभिप्रायमन्वजानात्स पार्थिवः ॥ ५ ॥
सा वै पित्राभ्यनुज्ञाता मात्रा च भरतर्षभ ।
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ ६ ॥

तां स्म दृष्ट्वैव सहसा दमयन्तीं नलो नृपः ।
आविष्टः शोकदुःखाभ्यां बभूवाश्रुपरिप्लुतः ॥ ७ ॥
तं तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा ।
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ॥ ८ ॥
ततः काषायवसना जटिला मलपङ्किनी ।
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ॥ ९ ॥
पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक ।
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ॥ १० ॥
अनागसं प्रियां भार्यां विजने श्रममोहिताम् ।
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम् ॥ ११ ॥
किं नु तस्य मया बाल्यादपराद्धं महीपतेः ।
यो मामुत्सृज्य विपिने गतवान्निद्रया हृताम् ॥ १२ ॥
साक्षाद्देवानपाहाय वृतो यः स मया पुरा ।
अनुव्रतां साभिकामां पुत्रिणीं त्यक्तवान्कथम् ॥ १३ ॥
अग्नौ पाणिं गृहीत्वा तु देवानामग्रतस्तथा ।
भरिष्यामीति सत्यं तु प्रतिश्रुत्य क्व तद्गतम् ॥ १४ ॥
दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिंदम ।
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु ॥ १५ ॥
अतीव कृष्णसाराभ्यां रक्तान्ताभ्यां जलं तु तत् ।
परिस्रवन्नलो दृष्ट्वा शोकार्त्तामिदमब्रवीत् ॥ १६ ॥

मम राज्यं प्रणष्टं यन्नाहं तत्कृतवान्स्वयम् ।
*कलिना तत्कृतं भीरु यच्च त्वामहमत्यजम् ॥ १७ ॥*

कथं नु नारी भर्तारमनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ॥ १८ ॥

दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति ॥ १९ ॥

दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।
प्राञ्जलिर्वेपमाना च भीता च नलमब्रवीत् ॥ २० ॥

न मामर्हसि कल्याण दोषेण परिशङ्कितुम् ।
मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप ॥ २१ ॥

तवाधिगमनार्थं तु सर्वतो ब्राह्मणा गताः ।
वाक्यानि मम गाथाभिर्गायमाना दिशो दश ॥ २२ ॥

ततस्त्वां ब्राह्मणो विद्वान्पर्णादो नाम पार्थिव ।
अभ्यगच्छत्कोसलायामृतुपर्णनिवेशने ॥ २३ ॥

तेन वाक्ये कृते सम्यक्प्रतिवाक्ये तथाहृते ।
उपायोयं मया दृष्टो नैषधानयने तव ॥ २४ ॥

त्वामृते न हि लोकेन्य एकाह्ना पृथिवीपते ।
समर्थो योजनशतं गन्तुमश्वैर्नराधिप ॥ २५ ॥

स्पृशेयं तेन सत्येन पादावेतौ महीपते ।
यथा नासत्कृतं किंचिन्मनसापि चराम्यहम् ॥ २६ ॥

अयं चरति लोकेस्मिन्भूतसाक्षी सदागतिः ।
एष मे मुञ्चतु प्राणान्यदि पापं चराम्यहम् ॥ २७ ॥
तथा चरति तिग्मांशुः परेण भुवनं सदा ।
स मुञ्चतु मम प्राणान्यदि पापं चराम्यहम् ॥ २८ ॥
चन्द्रमाः सर्वभूतानामन्तश्चरति साक्षिवत् ।
स मुञ्चतु मम प्राणान्यदि पापं चराम्यहम् ॥ २९ ॥
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै ।
विब्रुवन्तु यथासत्यमेतद्देवास्त्यजन्तु माम् ॥ ३० ॥
एवमुक्तस्तया वायुरन्तरिक्षादभाषत ।
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥ ३१ ॥
राजञ्शीलनिधिः स्फीतो दमयन्त्याः सुरक्षितः ।
साक्षिणो रक्षिणश्चास्या वयं त्रीन्परिवत्सरान् ॥ ३२ ॥
उपायो विहितश्चायं त्वदर्थमतुलोनया ।
न ह्येकाह्ना शतं गन्ता त्वामृतेन्यः पुमानिह ॥ ३३ ॥
उपपन्ना त्वया भैमी त्वं च भैम्या महीपते ।
नात्र शङ्का त्वया कार्या संगच्छ सह भार्यया ॥ ३४ ॥
तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥ ३५ ॥
तदद्भुततमं दृष्ट्वा नलो राजाथ भारत ।
दमयन्त्यां विशङ्कां तां व्यपाकर्षदरिंदम ॥ ३६ ॥

ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः ।
संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः ॥ ३७ ॥
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा ।
प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ॥ ३८ ॥
भैमीमपि नलो राजा भ्राजमानो यथा पुरा ।
सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत ॥ ३९ ॥
ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना ।
परीता तेन दुःखेन निःशश्वासायतेक्षणा ॥ ४० ॥
तथैव मलदिग्धाङ्गीं परिष्वज्य शुचिस्मिताम् ।
सुचिरं पुरुषव्याघ्रस्तस्थौ शोकपरिप्लुतः ॥ ४१ ॥
ततः सर्वं यथावृत्तं दमयन्त्या नलस्य च ।
भीमायाकथयत्प्रीत्या वैदर्भीजननी नृप ॥ ४२ ॥
ततोऽब्रवीन्महाराजः कृतशौचमहं नलम् ।
दमयन्त्या सहोपेतं कल्यं द्रष्टा सुखोषितम् ॥ ४३ ॥
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम् ।
वने विचरितं सर्वमूषतुर्मुदितौ नृप ॥ ४४ ॥
गृहे भीमस्य नृपतेः परस्परसुखैषिणौ ।
वसेतां हृष्टसंकल्पौ वैदर्भी च नलश्च ह ॥ ४५ ॥
स चतुर्थे ततो वर्षे संगम्य सह भार्यया ।
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् ॥ ४६ ॥

दमयन्त्यपि भर्तारमासाद्याप्यायिता भृशम् ।
अर्धसंजातसस्येव तोयं प्राप्य वसुंधरा ॥ ४७ ॥

॥ इति नलोपाख्याने चतुर्विंशतितमोऽध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृतः ।
वैदर्भ्या सहितः काले ददर्श वसुधाधिपम् ॥ १ ॥
तं भीमः प्रतिजग्राह पुत्रवत्परया मुदा ।
यथार्हं पूजयित्वा च समाश्वासयत प्रभुः ॥ २ ॥
तामर्हणां नलो राजा प्रतिगृह्य यथाविधि ।
परिचर्यां स्वकां तस्मै यथावत्प्रत्यवेदयत् ॥ ३ ॥
ततो बभूव नगरे सुमहान्हर्षजः स्वनः ।
जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथागतम् ॥ ४ ॥
सिक्ताः सुमृष्टपुष्पाढ्या राजमार्गाः स्वलंकृताः ।
द्वारिद्वारि च पौराणां पुष्पभङ्गः प्रकल्पितः ॥ ५ ॥
ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् ।
दमयन्त्या समायुक्तं जहृषे च नराधिपः ॥ ६ ॥
तमानाय्य नलं राजा क्षमयामास पार्थिवम् ।
दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत ॥ ७ ॥

कच्चित्तु नापराधं ते कृतवानस्मि नैषध ।
अज्ञातवासं वसतो मद्गृहे वसुधाधिप ॥ ८ ॥
यदि वा बुद्धिपूर्वाणि यद्यबुध्यापि कानिचित् ।
मया कृतान्यकार्याणि तानि त्वं क्षन्तुमर्हसि ॥ ९ ॥

## ॥ नल उवाच ॥

न मेपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव ।
कृतेपि च न मे कोपः क्षन्तव्यं हि मया तव ॥ १० ॥
पूर्वं ह्यपि सखा मेसि संबन्धी च जनाधिप ।
अत उर्ध्वं तु भूयस्त्वं प्रीतिमाहर्तुमर्हसि ॥ ११ ॥
सर्वकामैः सुविहितैः सुखमस्म्युषितस्त्वयि ।
न तथा स्वगृहे राजन्यथा तव गृहे सदा ॥ १२ ॥
इदं चैव हयज्ञानं त्वदीयं मयि तिष्ठति ।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव ॥ १३ ॥

## ॥ बृहदश्व उवाच ॥

एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः ।
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ १४ ॥
गृहीत्वा चाश्वहृदयं राजन्भाङ्गासुरिर्नृपः ।
सूतमन्यमुपादाय ययौ स्वपुरमेव ह ॥ १५ ॥

ऋतुपर्णे गते राजन्नलो राजा विशांपते ।
नगरे कुण्डिने कालं नातिदीर्घमिवावसत् ॥ १६ ॥

॥ इति नलोपाख्याने पञ्चविंशतितमोध्यायः ॥

---

## ॥ बृहदश्व उवाच ॥

स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः ।
पुराद्स्वल्पपरीवारो जगाम निषधान्प्रति ॥ १ ॥
रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशैः ।
पञ्चाशद्भिर्हयैश्चैव षट्शतैश्च पदातिभिः ॥ २ ॥
स कम्पयन्निव महीं त्वरमाणो महीपतिः ।
प्रविवेश सुसंरब्धस्तरसैव महामनाः ॥ ३ ॥
ततः पुष्करमासाद्य वीरसेनसुतो नलः ।
उवाच दीव्याव पुनर्बहु वित्तं मयार्जितम् ॥ ४ ॥
दमयन्ती च यच्चान्यन्मम किंचन विद्यते ।
एष वै मम संन्यासस्तव राज्यं तु पुष्कर ॥ ५ ॥
पुनः प्रवर्ततां द्यूतमिति मे निश्चिता मतिः ।
पणेनैकेन भद्रं ते प्राणयोश्च पणावहे ॥ ६ ॥
जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु ।
प्रतिपाणः प्रदातव्यः परमो धर्म उच्यते ॥ ७ ॥

न चेद्वाञ्छसि द्यूतं त्वं युद्धद्यूतं प्रवर्तताम् ।
द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप ॥ ८ ॥
वंशभोज्यमिदं राज्यमर्थितव्यं यथा तथा ।
येन केनाप्युपायेन वृद्धानामिति शासनम् ॥ ९ ॥
द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर ।
कैतवेनाक्षवत्यां वा युद्धे वा नाम्यतां धनुः ॥ १० ॥
नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव ।
ध्रुवमात्मजयं मत्वा प्रत्याह पृथिवीपतिम् ॥ ११ ॥
दिष्ट्या त्वयार्जितं वित्तं प्रतिपाणाय नैषध ।
दिष्ट्या च दुष्करं कर्म दमयन्त्याः क्षयं गतम् ॥ १२ ॥
धनेनानेन वै भैमी जितेन समलंकृता ।
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः ॥ १३ ॥
नित्यशो हि स्मरामि त्वां प्रतीक्षेपि च नैषध ।
देवनेन मम प्रीतिर्न भवत्यसुहृद्गणैः ॥ १४ ॥
जित्वा त्वद्य वरारोहां दमयन्तीमनिन्दिताम् ।
कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि ॥ १५ ।
श्रुत्वा तु तस्य ता वाचो बह्वबद्धप्रलापिनः ।
इयेष स शिरश्छेतुं खड्गेन कुपितो नलः ॥ १६ ॥
स्मयंस्तु रोषताम्राक्षस्तमुवाच ततो नलः ।
पणावः किं व्याहरसे जितो न व्याहरिष्यसि ॥ १७ ॥

ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च ।
एकपाणेन वीरेण नलेन स पराजितः ॥ १८ ॥
जित्वा तु पुष्करं राजा प्रहसन्निदमब्रवीत् ।
मम सर्वमिदं राज्यमव्यग्रं हतकण्टकम् ॥ १९ ॥
वैदर्भी न त्वया शक्या राजापसद वीक्षितुम् ।
तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः ॥ २० ॥
न त्वया तत्कृतं कर्म येनाहं विजितः पुरा ।
कलिना तत्कृतं कर्म त्वं च मूढ न बुध्यसे ॥ २१ ॥
नाहं परकृतं दोषं त्वय्याधास्ये कथंचन ।
यथासुखं वै जीव त्वं प्राणानवसृजामि ते ॥ २२ ॥
तथैव सर्वं संभारं स्वमंशं वितरामि ते ।
तथैव च मम प्रीतिस्त्वयि वीर न संशयः ॥ २३ ॥
सौहार्दं चापि मे त्वत्तो न कदाचित्प्रहास्यति ।
पुष्कर त्वं हि मे भ्राता स जीव शरदः शतम् ॥ २४ ॥
एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः ।
स्वपुरं प्रेषयामास परिष्वज्य पुनःपुनः ॥ २५ ॥
सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच ह ।
पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः ॥ २६ ॥
कीर्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी ।
यो मे वितरासि प्राणानधिष्ठानं च पार्थिव ॥ २७ ॥

स तथा सत्कृतो राज्ञा मासमुष्य ततो नृपः ।
प्रययौ स्वपुरं हृष्टः पुष्करः स्वजनान्वितः ॥ २८ ॥
प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम् ।
प्रविवेश पुरं श्रीमानत्यर्थमुपशोभितम् ॥ २९ ॥
पौरजानपदाश्चापि संप्रहृष्टतनूरुहाः ।
ऊचुः प्राञ्जलयः सर्वे सामात्यप्रमुखा जनाः ॥ ३० ॥
अद्य स्म निर्वृता राजन्पुरे जनपदेपि च ।
उपासितुं पुनः प्राप्ता देवा इव शतक्रतुम् ॥ ३१ ॥
प्रशान्ते तु पुरे हृष्टे संप्रवृत्ते महोत्सवे ।
महत्या सेनया राजा दमयन्तीमुपानयत् ॥ ३२ ॥
दमयन्तीमपि पिता सत्कृत्य परवीरहा ।
प्रास्थापयदमेयात्मा भीमो भीमपराक्रमः ॥ ३३ ॥
आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः ।
वर्तयामास मुदितो देवराडिव नन्दने ॥ ३४ ॥
ततः प्रकाशतां यातो जम्बुद्वीपे स राजसु ।
पुनः शशास तद्राज्यं प्रत्याहृत्य महायशाः ॥ ३५ ॥

॥ इति नलोपाख्याने षड्विंशतितमोध्यायः ॥

॥ इति नलोपाख्यानं समाप्तम् ॥



# ॥ अथ दशरथप्राणत्यागः ॥

प्रतिबुद्धो मुहूर्तेन शोकोपहतचेतनः ।
अथ राजा दशरथः स चिन्तामभ्यपद्यत ॥ १ ॥
रामलक्ष्मणयोश्चैव विवासाद्वासवोपमम् ।
आविवेशोपसर्गस्तं तमः सूर्यमिवासुरम् ॥ २ ॥
स राजा रजनीं षष्ठीं रामे प्रव्राजिते वनम् ।
अर्धरात्रे दशरथः संस्मरन्दुष्कृतं कृतम् ॥ ३ ॥
कौसल्यां पुत्रशोकार्त्तामिदं वचनमब्रवीत् ।
यदि जागर्षि कौसल्ये शृणु मेवहिता वचः ॥ ४ ॥
यदाचरति कल्याणि शुभं वा यदिवाशुभम् ।
तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥ ५ ॥
गुरुलाघवमर्थानामारम्भे कर्मणां फलम् ।
दोषं वा यो न जानाति स बाल इति होच्यते ॥ ६ ॥
कश्चिदाम्रवणं छित्त्वा पलाशांश्च निषिञ्चति ।
पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ ७ ॥
अविज्ञाय फलं यो हि कर्म त्वेवानुधावति ।
स शोचेत्फलवेलायां यथा किंशुकसेवकः ॥ ८ ॥
सोहमाम्रवणं छित्त्वा पलाशांश्च न्यषेचयम् ।
रामं फलागमे त्यक्त्वा पश्चाच्छोचामि दुर्मतिः ॥ ९ ॥

लब्धशब्देन कौसल्ये कुमारेण धनुष्मता ।
कुमारः शब्दवेधीति मया पापमिदं कृतम् ॥ १० ॥
तदिदं मेनुसंप्राप्तं देवि दुःखं स्वयंकृतम् ।
संमोहादिह बालेन यथा स्याद्भक्षितं विषम् ॥ ११ ॥
यथान्यः पुरुषः कश्चित्पलाशैर्मोहितो भवेत् ।
एवं मयाप्यविज्ञातं शब्दवेध्यमिदं फलम् ॥ १२ ॥
देव्यनूढा त्वमभवो युवराजो भवाम्यहम् ।
ततः प्रावृडनुप्राप्ता मम कामविवर्धिनी ॥ १३ ॥
अपास्य हि रसान्भौमांस्तप्त्वा च जगदंशुभिः ।
परेताचरितां भीमां रविराविशते दिशम् ॥ १४ ॥
उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः ।
ततो जहृषिरे सर्वे भेकसारंगबर्हिणः ॥ १५ ॥
क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्रिणः ।
वृष्टिवातावधूताग्रान्पादपानभिपेदिरे ॥ १६ ॥
पतितेनाम्भसा छन्नः पतमानेन चासकृत् ।
आबभौ मत्तसारंगस्तोयराशिरिवाचलः ॥ १७ ॥
पाण्डुरारुणवर्णानि स्रोतांसि विमलान्यपि ।
सुस्रुवुर्गिरिधातुभ्यः सभस्मानि भुजंगवत् ॥ १८ ॥
तस्मिन्नतिसुखे काले धनुष्मानिषुमान्रथी ।
व्यायामकृतसंकल्पः सरयूमन्वयां नदीम् ॥ १९ ॥

निपाने महिषं रात्रौ गजं वाभ्यागतं नदीम् ।
अन्यद्वा श्वापदं किंचिज्जिघांसुरजितेन्द्रियः ॥ २० ॥
अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः ।
अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥ २१ ॥
ततोहं शरमुद्धृत्य दीप्तमाशीविषोपमम् ।
शब्दं प्रति गजप्रेप्सुरभिलक्ष्यमपातयम् ॥ २२ ॥
तत्र वागुषसि व्यक्ता प्रादुरासीद्वनौकसः ।
हाहेति पततस्तोये बाणाद्व्यथितमर्मणः ॥ २३ ॥
तस्मिन्निपतिते बाणे वागभूत्तत्र मानुषी ।
कथमस्मद्विधे शस्त्रं निपतेत्तु तपस्विनि ॥ २४ ॥
प्रविविक्तां नदीं रात्रावुदहारोहमागतः ।
इषुणाभिहतः केन कस्य वापकृतं मया ॥ २५ ॥
ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः ।
कथं नु शस्त्रेण वधो मद्विधस्य विधीयते ॥ २६ ॥
जटाभारधरस्यैव वल्कलाजिनवाससः ।
को वधेन ममार्थी स्यात्किं वास्यापकृतं मया ॥ २७ ॥
एवं निष्फलमारब्धं केवलानर्थसंहितम् ।
न कश्चित्साधु मन्येत यथैव गुरुतल्पगम् ॥ २८ ॥
नेमं तथानुशोचामि जीवितक्षयमात्मनः ।
मातरं पितरं चोभावनुशोचामि मद्वधे ॥ २९ ॥

तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ।
मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति ॥ ३० ॥
वृद्धौ च मातापितरावहं चैकेषुणा हतः ।
केन स्म निहताः सर्वे सुबलेनाकृतात्मना ॥ ३१ ॥
तां गिरं करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः ।
कराभ्यां सशरं चापं व्यथितस्यापतद्भुवि ॥ ३२ ॥
तं देशमहमागम्य दीनसत्त्वः सुदुर्मनाः ।
अपश्यमिषुणा तीरे सरय्वास्तापसं हतम् ॥ ३३ ॥
अवकीर्णजटाभारं प्रविद्धकलशोदकम् ।
पांसुशोणितदिग्धाङ्गं शयानं शल्यपीडितम् ॥ ३४ ॥
स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थचेतनम् ।
इत्युवाच वचः क्रूरं दिधक्षन्निव तेजसा ॥ ३५ ॥
किं तवापकृतं राजन्वने निवसता मया ।
जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया ॥ ३६ ॥
एकेन खलु बाणेन मर्मण्यभिहते मयि ।
द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे ॥ ३७ ॥
तौ नूनं दुर्बलावन्धौ मत्प्रतीक्षौ पिपासितौ ।
चिरमाशाकृतां कष्टां तृष्णां संधारयिष्यतः ॥ ३८ ॥
न नूनं तपसो वास्ति फलयोगः श्रुतस्य वा ।
पिता यन्मां न जानीते शयानं पतितं भुवि ॥ ३९ ॥

जानन्नपि च किं कुर्यादशक्तश्चापरिक्रमः ।
भिद्यमानमिवाशक्तस्त्रातुमन्यो नगो नगम् ॥ ४० ॥
पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव ।
न त्वामनुदहेत्क्रुद्धो वनमग्निरिवैधितः ॥ ४१ ॥
इयमेकपदी राजन्यतो मे पितुराश्रमः ।
तं प्रसादय गत्वा त्वं न त्वां स कुपितः शपेत् ॥४२ ॥
विशल्यं कुरु मां राजन्मर्म मे निशितः शरः ।
रुणद्धि मृदु सोत्सेधं तीरमम्बुरयो यथा ॥ ४३ ॥
सशल्यः क्लिश्यते प्राणैर्विशल्यो विनशिष्यति ।
इति मामाविशच्चिन्ता तस्य शल्यापकर्षणे ॥ ४४ ॥
दुःखितस्य च दीनस्य मम शोकातुरस्य च ।
लक्षयामास हृदये चिन्तां मुनिसुतस्तदा ॥ ४५ ॥
ताम्यमानः स मां कृच्छ्रादुवाच परमार्त्तवत् ।
सीदमानो विवृत्ताङ्गश्चेष्टमानो गतः क्षयम् ॥ ४६ ॥
संस्तभ्य शोकं धैर्येण स्थिरचित्तो भवाम्यहम् ।
ब्रह्महत्याकृतं पापं हृदयादपनीयताम् ॥ ४७ ॥
न द्विजातिरहं राजन्माभूत्ते मनसो व्यथा ।
शूद्रायामस्मि वैश्येन जातो जनपदाधिप ॥ ४८ ॥
इतीव वदतः कृच्छ्राद्बाणाभिहतमर्मणः ।
विघूर्णतो विचेष्टस्य वेपमानस्य भूतले ॥ ४९ ॥

तस्य त्वाताम्यमानस्य तं बाणमहमुद्धरम् ।
स मामुद्वीक्ष्य संत्रस्तो जहौ प्राणांस्तपोधनः ॥ ५० ॥

॥ इति दशरथप्राणत्यागे प्रथमः सर्गः ॥

वधमप्रतिरूपं तु महर्षेस्तस्य राघवः ।
प्रलपन्नेव धर्मात्मा कौसल्यामिदमब्रवीत् ॥ १ ॥
तदज्ञानान्महत्पापं कृत्वाहं व्याकुलेन्द्रियः ।
एकस्त्वचिन्तयं बुद्ध्या कथं नु सुकृतं भवेत् ॥ २ ॥
ततस्तं घटमादाय पूर्णं परमवारिणा ।
आश्रमं तमहं प्राप यथाख्यातपथं गतः ॥ ३ ॥
तत्राहं दुर्बलावन्धौ वृद्धावपरिणायकौ ।
अपश्यं तस्य पितरौ लूनपक्षाविव द्विजौ ॥ ४ ॥
तन्निमित्ताभिरासीनौ कथाभिरपरिश्रमौ ।
तामाशां मत्कृते हीनावुपासीनावनाथवत् ॥ ५ ॥
पादशब्दं तु मे श्रुत्वा मुनिर्वाक्यमभाषत ।
किं चिरायसि मे पुत्र पानीयं क्षिप्रमानय ॥ ६ ॥
यन्न दत्तमिदं तात सलिले क्रीडता त्वया ।
उत्कण्ठिता ते मातेयं प्रविश क्षिप्रमाश्रमम् ॥ ७ ॥
यद्व्यलीकं कृतं पुत्र मात्रा ते यदि वा मया ।
न तन्मनसि कर्तव्यं त्वया तात तपस्विना ॥ ८ ॥

त्वं गतिस्त्वगतीनां च चक्षुस्त्वं हीनचक्षुषाम् ।
समासक्तास्त्वयि प्राणाः कथं त्वं नाभिभाषसे ॥ ९ ॥
मुनिमव्यक्तया वाचा तमहं सज्जमानया ।
हीनव्यञ्जनया प्रेक्ष्य भीतचित्त इवाब्रुवम् ॥ १० ॥
मनसः कर्मचेष्टाभिरभिसंस्तभ्य वाग्बलम् ।
आचचक्षे त्वहं तस्मै पुत्रव्यसनजं भयम् ॥ ११ ॥
क्षत्रियोहं दशरथो नाहं पुत्रो महात्मनः ।
सज्जनावमतं दुःखमिदं प्राप्तं स्वकर्मजम् ॥ १२ ॥
भगवश्चापहस्तोहं सरयूतीरमागतः ।
जिघांसुः श्वापदं किंचिन्निपाने वागतं गजम् ॥ १३ ॥
ततः श्रुतो मया शब्दो जले कुम्भस्य पूर्यतः ।
द्विपोयमिति मत्वा हि बाणेनाभिहतो मया ॥ १४ ॥
गत्वा नद्यास्ततस्तीरमपश्यमिषुणा हृदि ।
विनिर्भिन्नं गतप्राणं शयानं भुवि तापसम् ॥ १५ ॥
ततस्तस्यैव वचनादुपेत्य परितप्यतः ।
स मया सहसा बाण उद्धृतो मर्मतस्तदा ॥ १६ ॥
स चोद्धृतेन बाणेन तत्रैव स्वर्गमास्थितः ।
भगवन्तावुभौ शोचन्वृद्धाविति विलप्य च ॥ १७ ॥
अज्ञानाद्भवतः पुत्रः सहसाभिहतो मया ।
शेषमेवंगते यत्स्यात्तत्प्रसीदतु मे मुनिः ॥ १८ ॥

स तच्छ्रुत्वा वचः क्रूरं मयोक्तमघशंसिना ।
नाशकत्तीव्रमायासमकर्तुं भगवानृषिः ॥ १९ ॥
स बाष्पपूर्णवदनो निःश्वसञ्शोकमूर्छितः ।
मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ २० ॥
यद्येतदशुभं कर्म न स्म मेकथयः स्वयम् ।
फलेन्मूर्धा स्म ते राजन्सद्यः शतसहस्रधा ॥ २१ ॥
क्षत्रियेण वधो राजन्वानप्रस्थे विशेषतः ।
ज्ञानपूर्वकृतः स्थानाच्च्यावयेदपि वज्रिणम् ॥ २२ ॥
सप्तधा तु फलेन्मूर्धा मुनौ तपसि तिष्ठति ।
ज्ञानाद्विसृजतः शस्त्रं तादृशे ब्रह्मचारिणि ॥ २३ ॥
अज्ञानाद्धि कृतं यस्मादिदं तेनैव जीवसि ।
अपि ह्यद्य कुलं न स्याद्राघवाणां कुतो भवान् ॥ २४ ॥
नय नौ नृप तं देशमिति मां चाभ्यभाषत ।
अद्य तं द्रष्टुमिच्छावः पुत्रं पश्चिमदर्शनम् ॥ २५ ॥
रुधिरेणावसिक्ताङ्गं प्रकीर्णाजिनवाससम् ।
शयानं भुवि निःसंज्ञं धर्मराजवशं गतम् ॥ २६ ॥
अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ ।
अस्पर्शयं हतं पुत्रं तं मुनिं सह भार्यया ॥ २७ ॥
तौ पुत्रमात्मनः स्पृष्ट्वा तमासाद्य तपस्विनम् ।
निपेततुः शरीरेस्य पिता चैनमुवाच ह ॥ २८ ॥

नाभिवादयसे माद्य न च मामभिभाषसे ।
किं च शेषे तु भूमौ त्वं वत्स किं कुपितो ह्यसि ॥ २९ ॥
नन्वहं ते प्रियः पुत्र मातरं पश्य धार्मिक ।
किं नु नालिङ्गसे पुत्र सुकुमारवचो वद ॥ ३० ॥
कस्य वापररात्रेहं श्रोष्यामि हृदयंगमम् ।
अधीयानस्य मधुरं शास्त्रं वान्यद्विशेषतः ॥ ३१ ॥
को मां संध्यामुपास्यैव स्नात्वा हुतहुताशनः ।
श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितम् ॥ ३२ ॥
कन्दमूलफलं हृत्वा को मां प्रियमिवातिथिम् ।
भोजयिष्यत्यकर्मण्यमप्रग्रहमनायकम् ॥ ३३ ॥
इमामन्धां च वृद्धां च मातरं ते तपस्विनीम् ।
कथं वत्स भरिष्यामि कृपणां पुत्रगर्धिनीम् ॥ ३४ ॥
तिष्ठ मामागमः पुत्र यमस्य सदनं प्रति ।
श्वो मया सह गन्तासि जनन्या च समेधितः ॥ ३५ ॥
उभावपि च शोकार्त्तावनाथौ कृपणौ वने ।
क्षिप्रमेव गमिष्यावस्त्वया हीनौ यमक्षयम् ॥ ३६ ॥
ततो वैवस्वतं दृष्ट्वा तं प्रवक्ष्यामि भारतीम् ।
क्षमतां धर्मराजो मे बिभृयात्पितरावयम् ॥ ३७ ॥
दातुमर्हति धर्मात्मा लोकपालो महायशाः ।
ईदृशस्य ममाक्षय्यामेकामभयदक्षिणाम् ॥ ३८ ॥

अपापोसि यथा पुत्र निहतः पापकर्मणा ।
तेन सत्येन गच्छाशु ये लोकाः शस्त्रयोधिनाम् ॥ ३९ ॥
यां हि शूरा गतिं यान्ति संग्रामेष्वनिवर्तिनः ।
हतास्त्वभिमुखाः पुत्र गतिं तां परमां व्रज ॥ ४० ॥
यां गतिं सगरः शैब्यो दिलीपो जनमेजयः ।
नहुषो धुन्धुमारश्च प्राप्तास्तां गच्छ पुत्रक ॥ ४१ ॥
या गतिः सर्वसाधूनां स्वाध्यायात्तपसश्च या ।
भूमिदस्याहिताग्नेश्च एकपत्नीव्रतस्य च ॥ ४२ ॥
गोसहस्रप्रदातॄणां गुरुसेवाभृतामपि ।
देहन्यासकृतां या च तां गतिं गच्छ पुत्रक ॥ ४३ ॥
न हि त्वस्मिन्कुले जातो गच्छत्यकुशलां गतिम् ।
स तु यास्यति येन त्वं निहतो मम बान्धवः ॥ ४४ ॥
एवं स कृपणं तत्र पर्यदेवत्तदासकृत् ।
ततोस्मै कर्तुमुदकं प्रवृत्तः सह भार्यया ॥ ४५ ॥
स तु दिव्येन रूपेण मुनिपुत्रः स्वकर्मभिः ।
क्षतं शरीरमुत्सृज्य पितरौ वाक्यमब्रवीत् ॥ ४६ ॥
स्थानमस्मि महत्प्राप्तो भवतोः परिचारणात् ।
भवन्तावपि च क्षिप्रं मम मूलमुपैष्यतः ॥ ४७ ॥
एवमुक्त्वा तु दिव्येन विमानेन वपुष्मता ।
स्वर्गमध्यरुहात्क्षिप्रं शक्रेण सह धर्मवित् ॥ ४८ ॥

स कृत्वाथोदकं तूर्णं तापसः सह भार्यया ।
मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ ४९ ॥
अद्यैव जहि मां राजन्मरणे नास्ति मे व्यथा ।
यः शरेणैकपुत्रं मां त्वमकार्षीरपुत्रकम् ॥ ५० ॥
त्वया तु यदविज्ञानान्निहतो मे स बालकः ।
तेन त्वामपि शप्स्येहं सुदुःखमतिदारुणम् ॥ ५१ ॥
पुत्रव्यसनजं दुःखं यदेतन्मम सांप्रतम् ।
एवं त्वं पुत्रशोकेन राजन्कालं करिष्यसि ॥ ५२ ॥
आज्ञानात्तु हतो यस्मात्क्षत्रियेण त्वया मुनिः ।
तस्मात्त्वां नाविशत्याशु ब्रह्महत्या नराधिप ॥ ५३ ॥
त्वामप्येतादृशो भावः क्षिप्रमेव गमिष्यति ।
जीवितान्तकरो घोरो दातारमिव दक्षिणा ॥ ५४ ॥
एवं शापं मयि न्यस्य विलप्य करुणं बहु ।
चितामारोप्य देहं तन्मिथुनं स्वर्गमभ्ययात् ॥ ५५ ॥
तदेतच्चिन्तयानेन स्मृतं पापं मया स्वयम् ।
तदा बाल्यात्कृतं देवि शब्दवेध्यानुशिक्षिणा ॥ ५६ ॥
तस्यायं कर्मणो देवि विपाकः समुपस्थितः ।
अपथ्यैः सह संभुक्ते व्याधिरन्नरसे यथा ॥ ५७ ॥
तस्मान्मामागतं भद्रे तस्योदारस्य तद्वचः ।
यदहं पुत्रशोकेन संत्यजिष्यामि जीवितम् ॥ ५८ ॥

इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह तु भूमिपः ।
चक्षुर्भ्यां त्वां न पश्यामि कौसल्ये साधु मां स्पृश ॥ ५९॥
यदि मां संस्पृशेद्रामः सकृदन्वारभेत वा ।
धनं वा यौवराज्यं वा जीवेयमिति मे मतिः ॥ ६० ॥
न तन्मे सदृशं देवि यन्मया राघवे कृतम् ।
सदृशं तत्तु तस्यैव यदनेन कृतं मयि ॥ ६१ ॥
दुर्वृत्तमपि कः पुत्रं त्यजेद्भुवि विचक्षणः ।
कश्च प्रव्राज्यमानो वा नासूयेत्पितरं सुतः ॥ ६२ ॥
चक्षुषा त्वां न पश्यामि स्मृतिर्मम विलुप्यते ।
दूता वैवस्वतस्यैते कौसल्ये त्वरयन्ति माम् ॥ ६३ ॥
अतस्तु किं दुःखतरं यदहं जीवितक्षये ।
न हि पश्यामि धर्मज्ञं रामं सत्यपराक्रमम् ॥ ६४ ॥
तस्यादर्शनजः शोकः सुतस्याप्रतिकर्मणः ।
उच्छोषयति वै प्राणान्वारि स्तोकमिवातपः ॥ ६५ ॥
न ते मनुष्या देवास्ते ये चारु शुभकुण्डलम् ।
मुखं द्रक्ष्यन्ति रामस्य वर्षे पञ्चदशे पुनः ॥ ६६ ॥
कौसल्ये चित्तमोहेन हृदयं सीदतीव मे ।
वेदये न च संयुक्ताञ्शब्दस्पर्शरसानहम् ॥ ६७ ॥
चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि मे ।
क्षीणस्नेहस्य दीपस्य संसक्ता रश्मयो यथा ॥ ६८ ॥

अयमात्मभवः शोको मामनाथमचेतनम् ।
संसाधयति वेगेन यथा कूलं नदीरयः ॥ ६९ ॥
हा राघव महाबाहो हा ममायासनाशन ।
हा पितृप्रिय मे नाथ हा ममासि गतः सुत ॥ ७० ॥
हा कौसल्ये न पश्यामि हा सुमित्रे तपस्विनि ।
हा नृशंसे ममामित्रे कैकेयि कुलपांसनि ॥ ७१ ॥
इति मातुश्च रामस्य सुमित्रायाश्च संनिधौ ।
राजा दशरथः शोचञ्जीवितान्तमुपागमत् ॥ ७२ ॥

॥ इति दशरथप्राणत्यागे द्वितीयः सर्गः ॥

---

# पञ्चतन्त्रोदाहृतकथावली

## कथा १

अस्ति कस्मिंश्चिद्वनोद्देशे करालकेसरो नाम सिंहः प्रतिवसति स्म । तस्य च धूसरको नाम शृगालः सदैवानुयायी परिचारकोस्ति । अथ कदाचित्तस्य सिंहस्य हस्तिना सह युध्यमानस्य शरीरे गुरुतराः प्रहाराः संजाता यैः पदमेकमपि चलितुं न शक्नोलनाच्च धूसरकः

क्षुत्क्षामकण्ठो दौर्बल्यं गतः। अन्यस्मिन्नहनि सिंहमवोचत् । स्वामिन्बुभुक्षया पीडितोहं पदात्पदमपि चलितुं न शक्नोमि । तत्कथं ते शुश्रूषां करोमि । सिंह आह । भो गच्छान्वेषय किंचित्सत्त्वं येनेमामवस्थां गतोपि व्यापादयामि । तद्राकर्ण्य शृगालोन्वेषणं कुर्वन्कंचित्समीपवर्तिनं ग्राममासादितवान् । तत्र च लम्बकर्णो नाम गर्दभस्तडागोपान्ते प्रविरलदूर्वाङ्कुरान्कृच्छ्रादास्वादयन्दृष्टः । ततश्च समीपवर्तिना भूत्वा तेनाभिहितः । माम नमस्कारोयं मदीयः संभाव्यताम् । चिराद्दृष्टोसि । तत्कथय किमेवं दुर्बलतां गतः । लम्बकर्ण आह । भो भगिनीसुत किं कथयामि । रजकोतिनिर्दयोतिभारेण मां पीडयति । घासमुष्टिमपि न प्रयच्छति । केवलमत्र दूर्वाङ्कुरान्धूलिमिश्रितान्भक्षयामि । तत्कुतो मे शरीरपुष्टिरिति । शृगाल आह । माम यद्येवं तदस्ति मरकतसदृशसस्यप्रायो नदीसनाथो रमणीयतरः प्रदेशः । तत्रागत्य मया सह सुभाषितगोष्ठीसुखमनुभवंस्तिष्ठ । लम्बकर्ण आह । भो भगिनीसुत युक्तमुक्तं भवता परं वयं ग्राम्याः पशवोरण्यचराणां वध्याः । तत्किं तेन भव्यप्रदेशेन । शृगाल आह । माम मैवं वद । मद्भुजपञ्जरपरिरक्षितः प्रदेशोसौ । तन्नास्ति कस्यचिदपरस्य तत्रप्रवेशः । अपरमनेनैव भवद्विधिना रजककदर्थितास्तत्र ति-

स्त्रो रासभ्योनाथाः सन्ति । ताश्च पुष्टिमापन्ना यौवनोत्कटा इदं मामूचुः । यदि त्वमस्माकं सत्यो मातुलस्तदा किंचिद्ग्रामान्तरं गत्वास्मद्योग्यं कंचित्पतिमानय । एतदर्थे त्वामहं तत्र नयामि । अथ शृगालवचनानि श्रुत्वा कामपीडिताङ्गो लम्बकर्णस्तमुवाच । भद्र यद्येवं तदग्रे भव । त्वरितं तत्र गच्छावः । अथवा साध्विदमुच्यते ।

नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् ।
यस्याः सङ्गेन जीव्येत म्रियेत च वियोगतः ॥ १ ॥

तथा च ।

यासां नाम्नापि कामः स्यात्संगमं दर्शनं विना ।
तासां दृक्संगमं प्राप्य यन्न द्रवति कौतुकम् ॥ २ ॥

तथानुष्ठिते शृगालेन सह सिंहान्तिकमागतः । सिंहोपि व्यथाकुलस्तं गर्दभं दृष्ट्वा यावत्समुत्तिष्ठति तावद्रासभः पलायितुमारब्धवान् । अथ तस्य पलायमानस्य सिंहेन तलप्रहारो दत्तः स च मन्दभाग्यस्य व्यवसाय इव व्यर्थतां गतः । अत्रान्तरे शृगालः कोपाविष्टस्तमुवाच । भोः किमेवंविधः प्रहारस्ते । यदि गर्दभोपि तव पुरो बलाद्गच्छति । तत्कथं गजेन सह युद्धं करिष्यसि । तद्दृष्टं ते बलम् । अथ विलक्षस्मितं सिंह आह । भोः किमहं करोमि । मया

तः । अथ तद्वचनं श्रद्धेयं मत्वा सिंहस्तेन सह संविभज्य निःशङ्कितमनास्तं भक्षितवान् ॥

---

## कथा २

कस्मिंश्चिद्वनप्रदेशे चण्डरवो नाम शृगालः प्रतिवसति स्म । स च कदाचित्क्षुधाविष्टो जिह्वालौल्यान्नगरान्तरे प्रविष्टः । अथ तं नगरवासिनः सारमेया अवलोक्य सर्वतः परिधावन्तं तीक्ष्णदंष्ट्राग्रैर्भक्षितुमारब्धाः । तैर्भक्ष्यमाणः प्राणभयात्प्रत्यासन्नं रजकगृहं प्रविष्टः । तत्र च नीलीरसपरिपूर्णं महाभाण्डं सज्जीकृतमासीत् । तत्रापि सारमेयैः समन्वितः पपात । अथ यावन्निष्क्रान्तस्तावन्नीलीवर्णः संजातः । ततः सर्वे ते सारमेयास्तं शृगालविशेषमजानन्तो यथाभीष्टदिशं जग्मुः । चण्डरवोपि तदन्तरमासाद्य काननाभिमुखं प्रतस्थे । नैव नीलीवर्णेन कदाचित्त्यज्यते । उक्तं च ।

वज्रलेपस्य मूर्खस्य नारीणां मर्कटस्य च ।
एको ग्राहस्तु नीचानां नीलीमद्यपयोस्तथा ॥ १ ॥

अथ तं हरगलगरलतमालसमप्रभमपूर्वं सत्त्वमवलोक्य सर्वे सिंहव्याघ्रद्वीपिवृकप्रभृतयोरण्यवासिनो भयव्याकुली-

कृतमनसः समन्तात्पलायनक्रियां कुर्वन्ति कथयन्ति च । अहो अपूर्वमेतत्सत्त्वं कुतोप्यागतं तन्न विज्ञायते कीदृगस्य चेष्टितं पौरुषं च । तद्दूरतरं गच्छामः । उक्तं च ।

न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम् ।
न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रेय आत्मनः ॥ २ ॥

चण्डरवोपि तान्भयव्याकुलिताञ्ज्ञात्वेदमाह । भोभोः श्वापदाः किं यूयं मां दृष्ट्वैवं संत्रस्ता व्रजथ । तन्न भेतव्यम् । अहं ब्रह्मणाद्य स्वयमेवाकार्याभिहितः । यच्छ्वापदानां मध्ये कश्चिद्राजा नास्ति तत्त्वं मयाद्य सर्वश्वापदप्रभुत्वेभिषिक्तः ककुद्रुमाभिधः । ततो गत्वा क्षितितले तान्सर्वान्परिपालयेति । ततोहमत्रागतस्तन्मम च्छत्रच्छायायां सर्वैरेव श्वापदैः सदैव वस्तव्यमिति । अहं ककुद्रुमो नाम राजा त्रैलोक्ये श्वापदराजः संजातः । तच्छ्रुत्वा ते श्वापदाः सिंहपुरःसराः स्वामिन्प्रभो समादिशेति वदन्तस्तं परिवव्रुः । अथ तेन सिंहस्यामात्यपदवी प्रदत्ता । व्याघ्रस्य च शय्यापालत्वम् । द्वीपिनस्ताम्बूलाधिकारः । करिणः प्रतीहारत्वम् । वानरस्य च्छत्रधारित्वम् । ये चात्मीयजात्यास्तैः सहालापमात्रमपि न करोति । शृगालाः सर्वैप्यर्धचन्द्रं दत्त्वा निःसारिताः । एवं तस्य राजक्रियायां वर्तमानस्य ते सिंहादयो

मृगान्व्यापाद्य तत्पुरतः प्रक्षिपन्ति। सोपि प्रभुधर्मेण सर्वेषां तान्विभज्य प्रयच्छति। एवं गच्छति काले कदाचित्तेन सभागतेन दूरदेशे शब्दायमानस्य शृगालवृन्दस्य कोलाहलोश्रावि। तं शब्दं श्रुत्वा पुलकिततनुरानन्दाश्रुपरिपूर्णनयन उत्थाय तारस्वरेण विरोतुं प्रारब्धवान्। अथ ते सिंहादयस्तमाकर्ण्य तारस्वरं शृगालोयमिति मत्वा सलज्जमधोमुखाः क्षणमेकं स्थित्वा मिथः प्रोचुः। भो वाहिता वयमनेन क्षुद्रशृगालेन। तद्वध्यतामिति। सोपि तदाकर्ण्य पलायितुमिच्छन्ननुचितस्थानेपि सिंहादिभिः खण्डशः कृतो मृतश्चेति।

---

## कथा ३

अस्ति कस्मिंश्चिद्वनोद्देशे सिंहदंपती प्रतिवसतः स्म। अथ कदाचित्सिंही प्रसूता पुत्रद्वयमजीजनत्। सिंहोपि नित्यमेव मृगान्व्यापाद्य सिंह्यै ददाति। अथान्यस्मिन्नहनि तेन किमपि नासादितम्। वने भ्रमतोपि तस्य रविरस्तं गतः। अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः। स च बालकोयमित्यवधार्य यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्या जीवन्तमेव समर्पितवान्। ततः सिंह्याभिहितम्। भोः कान्त त्वयानीतं किंचिदस्माकं भोजनम्। सिंह आह। प्रिये मया-

दैनं शृगालशिशुं परित्यज्य न किंचित्सत्त्वमासादितम् । स च बालोयमिति मत्वा न व्यापादितोविशेषात्स्वजातीयश्च । उक्तं च यतः ।

स्त्रीविप्रलिङ्गिबालेषु प्रहर्तव्यं न कर्हिचित् ।
प्राणत्यागेपि संजाते विश्वस्तेषु विशेषतः ॥ १ ॥

इदानीं त्वमेनं भक्षयित्वा पथ्यं कुरु । प्रभातेन्यत्किंचिदुपार्जयिष्यामि । सा प्राह । भोः कान्त त्वया बालकोयं विचिन्त्य न हतः । तत्कथमेनमहं स्वोदरार्थे विनाशयामि । उक्तं च ।

अकृत्यं नैव कर्तव्यं प्राणत्यागेपि संस्थिते ।
न च कृत्यं परित्याज्यं धर्म एष सनातनः ॥ २ ॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यतीत्येवमुक्त्वा तमपि स्वस्तनक्षीरेण परां पुष्टिमनयत् । एवं ते त्रयोपि शिशवः परस्परमज्ञातजातिविशेषा एकाचारविहारा बाल्यसमयं निर्वाहयन्ति । अथ कदाचित्तत्र वने भ्रमन्नरण्यगजः समायातः । तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावत्तावत्तेन शृगालसुतेनाभिहितम् । अहो गजोयं युष्मत्कुलशत्रुः । तन्न गन्तव्यमेतस्याभिमुखम् । एव-

मुक्त्वा गृहं प्रधावितः । तावपि ज्येष्ठबान्धवभङ्गान्निरुत्साहतां गतौ । अथवा साध्विदमुच्यते ।

एकेनापि सुधीरेण सोत्साहेन रणं प्रति ।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात् ॥ ३ ॥

तथा च ।

अत एव हि वाञ्छन्ति भूपा योधान्महाबलान् ।
शूरान्वीरान्कृतोत्साहान्वर्जयन्ति च कातरान् ॥ ४ ॥

अथ तौ द्वावपि गृहं प्राप्य पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुः । यथा गजं दृष्ट्वा दूरतोपि नष्टः । सोपि तदाकर्ण्य कोपाविष्टमनाः प्रस्फुरिताधरपल्लवस्ताम्रलोचनस्त्रिशिखां भ्रुकुटिं कृत्वा तौ निर्भर्त्सयन्परुषतरवचनान्युवाच। ततः सिंह्यैकान्ते नीत्वा प्रबोधितोसौ । वत्स मैवं कदाचिज्जल्प भवदीयलघुभ्रातरावेतौ । अथासौ प्रभूतकोपाविष्टस्तामुवाच । किमहमेताभ्यां शौर्येण रूपेण विद्याभ्यासेन कौशलेन वा हीनो येन मामुपहसतः । तन्मयावश्यमेतौ व्यापादनीयौ । तदाकर्ण्य सिंही तस्य जीवितमिच्छन्त्यन्तर्विहस्य प्राह ।

शूरोसि कृतविद्योसि दर्शनीयोसि पुत्रक ।
यस्मिन्कुले समुत्पन्नो गजस्तत्र न हन्यते ॥ ५ ॥

तत्सम्यक् शृणु वत्स । त्वं शृगालीसुतः कृपया मया स्वस्तनक्षीरेण पुष्टिं नीतः । तद्यावदेतौ मत्पुत्रौ शिशुत्वात्त्वां शृगालं न जानीतस्तावद्द्रुततरं गत्वा स्वजातीयानां मध्ये भव । नो चेदाभ्यां हतो मृत्युपथं समेष्यसि । सोपि तद्वचनं श्रुत्वा भयव्याकुलमनाः शनैःशनैरपसृत्य स्वजात्या मिलितः ।

## कथा ४

अस्ति कस्मिंश्चिदधिष्ठान उद्धतो नाम गर्दभः । स च दिवा रजकगृहे भारोद्वहनं कृत्वा रात्रौ स्वेच्छया पर्यटति । अथान्यदा तस्य रात्रौ क्षेत्रेषु पर्यटतः कदाचिच्छृगालेन सार्धं मैत्री बभूव । तौ च वृतिभङ्गं कृत्वा कर्कटिकाक्षेत्रेषु प्रविश्य तत्फलभक्षणं स्वेच्छया कृत्वा प्रत्यूषे स्वस्थानं व्रजतः । अथ कदाचित्क्षेत्रमध्यस्थितेन मदोद्धतरासभेन शृगालोभिहितः । भो भगिनीसुत पश्य । अतीव निर्मला रजनी । तदहं गीतं करिष्यामि । तत्कथय कतमेन रागेण करोमि । स प्राह । माम किमनेनानर्थप्रचालनेन यतश्चौरकर्मप्रवृत्तावावाम् । चौरचारैर्निभृतैरेव स्थातव्यमिति । उक्तं च ।

प्रकाशं वर्जयेच्चोरो निद्रालुश्चर्मचारिकाम् ।
जिह्वालौल्यं च रोगाढ्यो जीवितुं योत्र वाञ्छति ॥ १ ॥

तथा त्वदीयं गीतं शङ्खवादानुवादि न मधुरमिति । दूरादपि श्रुत्वोत्थाय क्षेत्ररक्षाबन्धं वधं च विधास्यन्ति तद्भक्षय तावदमृतरसाश्चिर्भटीः । मा त्वमत्र गीतव्यापारो भव । तच्छ्रुत्वा रासभ आह । भो वनाश्रयत्वात्त्वं गीत-रसं न वेत्सि । तेनैतद्ब्रवीषि । उक्तं च ।

शरज्ज्योत्स्नाहते दूरं तमसि प्रियसंनिधौ ।
धन्यानां विशति श्रोत्रे गीतझंकारजा सुधा ॥ २ ॥

शृगाल आह । माम अस्त्येतत्परं कठोरमुन्नदसि । तत्किं तेन नादेन स्वार्थभ्रंशिना । रासभ आह । धिग्धिग् मूर्ख किमहं गीतं न जानामि । तच्छ्रूयतां तस्य भेदः । तद्यथा ।

सप्त स्वरास्त्रयो ग्रामा मूर्छनास्त्वेकविंशतिः ।
ताला एकोनपञ्चाशत्तिस्रो मात्रा लयास्त्रयः ॥ ३ ॥
स्थानत्रयं यतीनां च षडास्यानि रसा नव ।
वर्णाः षड्विंशतिर्भावाश्चत्वारिंशत्ततः स्मृताः ॥ ४ ॥
पञ्चाशीत्यधिकं ह्येतद्गीतानां च शतं स्मृतम् ।
सुवर्णरचितं शुद्धं गीताङ्गैः सकलैर्युतम् ॥ ५ ॥

नान्यद्गीतात्प्रियं लोके देवानामपि दृश्यते ।
शुष्कस्नायुस्वराह्लादात्त्र्यक्षं जग्राह रावणः ॥ ६ ॥

तत्कथं भगिनीसुत मामनभिज्ञं वदसि निवारयसि च । शृगाल आह । माम यद्येवं तदहं वृतिद्वारदेशस्थः क्षेत्रपालमवलोकयामि त्वं पुनः स्वेच्छया गीतं कुरु । तथानुष्ठिते गर्दभः शब्दायितुमारब्धः । ततः क्षेत्रपालो रासभशब्दितं श्रुत्वा क्रोधाद्दन्तान्दन्तैर्निपीडयंल्लगुडमुद्यम्य प्रधावितः । यावद्रासभो दृष्टस्तावल्लगुडप्रहारैस्तथा हतो यथा प्रताडितो भूपृष्ठे पतितः । ततश्च सच्छिद्रोलूखलं गले बद्ध्वा क्षेत्रपालः सुप्तः । रासभोपि जातिस्वभावाद्गतवेदनः क्षणेनाभ्युत्थितः । उक्तं च ।

सारमेयखराश्वानां गर्दभस्य विशेषतः ।
मुहूर्तात्परतो न स्यात्प्रहारजनिता व्यथा ॥ ७ ॥

ततश्च तदेवोलूखलमादाय वृतिं चूर्णयित्वा पलायितुमारब्धः । एतस्मिन्नन्तरे शृगालो दूरादेव तं दृष्ट्वा सस्मितमिदमाह ।

साधु मातुल गीतेन मया प्रोक्तोपि न स्थितः ।
अपूर्वोयं मणिर्बद्धः संप्राप्तं गीतलक्षणम् ॥ ८ ॥

---

# ॥ अथ श्लोकरत्नमाला ॥

अकृतज्ञमकार्यज्ञं दीर्घरोषमनार्जवम् ।
चतुरो विद्धि चाण्डालाञ्जन्मना सह पञ्चमम् ॥ १ ॥

अकृत्वा परसंतापमगत्वा खलनम्रताम् ।
अनुत्सृज्य सतां वर्त्म यत्स्वल्पमपि तद्बहु ॥ २ ॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति ॥ ३ ॥

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ ४ ॥

अत्तुं वाञ्छति शांभवो गणपतेराखुं क्षुधार्त्तः फणी ।
तं च क्रौञ्चरिपोः शिखी गिरिसुतासिंहोपि नागाशनम् ।
इत्थं यत्र परिग्रहस्य घटना शंभोरपि स्याद्गृहे ।
तत्रान्यस्य कथं न भावि जगतस्तस्मात्स्वरूपं हि तत्॥५॥

अधोधः पश्यतः कस्य महिमा नोपजायते ।
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ ६ ॥

अनागतविधातारमप्रमत्तमकोपनम् ।
स्थिरारम्भमदीनं च नरं श्रीरुपतिष्ठते ॥ ७ ॥

अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते ।
उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति ॥ ८ ॥

असहायः समर्थोऽपि तेजस्वी किं करिष्यति ।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ॥ ९ ॥

आगच्छदुत्सवो भाति यथैव न तथा गतः ।
हिमांशोरुदयः सायं चकास्ति न तथोषसि ॥ १० ॥

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ११ ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता ।
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ १२ ॥

कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः ।
न ह्यकूपारवत्कूपा वर्धन्ते विधुकान्तिभिः ॥ १३ ॥

काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम् ।
तथा सत्संनिधानेन मूर्खो याति प्रवीणताम् ॥ १४ ॥

कासारेषु सरित्सु सिन्धुषु तथा नीचेषु नीरग्रहं
धिक्तत्रापि शिरोनतिः किमपरं हेयं भवेन्मानिनाम् ।
इत्यालोच्य विमुच्य चातकयुवा तेषु स्पृहामादरा-
दुद्ग्रीवस्तव वारिवाह कुरुते धाराधरालोकनम् ॥ १५ ॥

किं लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः संगतिः
का हानिः समये च्युतिर्निपुणता का धर्मतत्त्वे रतिः

कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥१६॥

खलः करोति दुर्वृत्तिं नूनं फलति साधुषु ।
दशाननो हरेत्सीतां बन्धनं स्यान्महोदधेः ॥ १७ ॥

गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः ।
वासुदेवं नमस्यन्ति वसुदेवं न ते जनाः ॥ १८ ॥

चला लक्ष्मीश्चलाः प्राणाश्चलो देहोपि यौवनम् ।
चलाचलश्च संसारः कीर्तिर्धर्मश्च निश्चलः ॥ १९ ॥

जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ २० ॥

तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ २१ ॥

तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधता ।
अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ २२ ॥

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः ।
समुच्छ्रितानेव तरून्प्रबाधते
महान्महत्स्वेव करोति विक्रमम् ॥ २३ ॥

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ २४ ॥

त्यक्त्वात्मसुखभोगेच्छां सर्वसत्त्वसुखैषिणः ।
भवन्ति परदुःखेन साधवो नित्यदुःखिताः ॥ २५ ॥

दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
त्यागसमेतं वित्तं दुर्लभमेतच्चतुर्भद्रम् ॥ २६ ॥

दुश्चरितैरेव निजैर्भवति दुरात्मा विशङ्कितो नित्यम् ।
दर्शनपथमापन्नं पन्नगकुलमाकुलीभवति ॥ २७ ॥

धनिनोपि दुरुन्मादा युवानोपि न चञ्चलाः ।
प्रभवोप्यप्रमत्तास्ते महामहिमशालिनः ॥ २८ ॥

निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः ।
सोद्योगं नरमायान्ति विवशाः सर्वसंपदः ॥ २९ ॥

निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् ।
न सुवर्णे ध्वनिस्तादृग्यादृक्कांस्ये प्रजायते ॥ ३० ॥

न्यायवादी स्थिरारम्भः क्षिप्रकारी महोद्यमः ।
अदीनोकोपनश्चैव नरः श्रीभाजनं भवेत् ॥ ३१ ॥

परोपकारनिरता ये स्वर्गसुखनिःस्पृहाः ।
जगद्धिताय जनिताः साधवस्त्वीदृशा भुवि ॥ ३२ ॥

पापान्निवारयति योजयते हिताय
गुह्यानि गूहति गुणान्प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ३३ ॥

प्रकटान्यपि नैपुणं महत्परवाच्यानि चिराय गोपितुम् ।
विवरीतुमथात्मनो गुणान्भृशमाकौशलमार्यचेतसाम् ॥३४॥

प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ३५ ॥

प्रसरति मतिः कार्यारम्भे दृढीभवति स्पृहा
स्वयमुपनयन्नर्थान्मन्त्रो न गच्छति विप्लवम् ।
स्फुरति सफलस्तर्कश्चित्तं समुन्नतिमश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ ३६ ॥

महत्त्वमेतन्महतां नयालंकारधारिणाम् ।
न मुञ्चन्ति यदारब्धं कृच्छ्रेऽपि व्यसनोदये ॥ ३७ ॥

मातेव रक्षति पितेव हिते नियुङ्क्ते
भार्येव चाभिरमयत्यपनीय खेदम् ।
कीर्तिं च दिक्षु वितनोति तनोति वित्तं
विद्या करोति सकलं खलु बन्धुकृत्यम् ॥ ३८ ॥

मृगा मृगैः सङ्गमनुव्रजन्ति
गावश्च गोभिस्तुरगास्तुरंगैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः
समानशीलव्यसनेषु सख्यम् ॥ ३९ ॥

यदा किंचिज्ज्ञोहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित्किंचिद्बुधजनसकाशादधिगतं
तदा मूर्खोस्मीति ज्वर इव मदो मे व्यपगतः ॥ ४० ॥
यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम् ।
अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ॥४१॥
यः समुत्पतितं क्रोधं क्षमयेह निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ४२ ॥
यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानविक्रमयशोभिरभग्नमानम् ।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोपि जीवति चिरं च बलिं च भुङ्क्ते ॥ ४३ ॥
यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः ॥ ४४ ॥
यस्तु नारभते कर्म नरो दैवपरायणः ।
क्षिप्रं भवति निर्द्रव्यः पलायनपरायणः ॥ ४५ ॥
विनाप्यर्थैर्धीरः स्पृशति बहुमानोन्नतिपदं
समायुक्तोप्यर्थैः परिभवपदं याति कृपणः ।
स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां
द्युतिं सैंहीं किं श्वा धृतकनकमालोपि लभते ॥ ४६ ॥

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णः स्थिरो भवेत् ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न गच्छति ॥ ४७ ॥



# GLOSSARY

## अ

अ Particle of privation, as धर्म justice, अधर्म injustice. If the word begin with a vowel अन् is substituted for अ; as आगत come, अनागत not come.

अंश *s. m.* A share, a part.

अंशु *s. m.* A ray.

अंशुमत् *a. m f n.* Having rays. radiant. 2 *s. m.* The sun.

अकर्मण्य *a. m f n.* Inefficient. useless.

अकस्मात् *ad.* Without a cause or reason, suddenly, unexpectedly.

अकाम *a. m f n.* Unwilling, without desire.

अकार्य *s. n.* An improper act.

अकार्यज्ञ *a. m f n.* Indiscreet.

अकाल *s. m.* A bad season, an improper or undue time.

अकूपार *s. m.* The ocean.

अकृतज्ञ *a. f m n.* Ungrateful, making no returns for kindness.

अकृतात्मन् *a. m f n.* Having a bad disposition.

अक्ष *s. m.* A die for playing with. 2 A part of a carriage.

अक्षद्यूत *s. n.* Gambling, dicing.

अक्षय, अक्षय्य *a. m f n.* Undecaying, eternal, immortal.

अक्षवती *s. f.* Gambling with dice.

अक्षहृदय *s. n.* The knowledge or science of dice.

अक्षि *s. n.* The eye.

अक्षौहिणी *s. f.* A complete army consisting of 109,350 foot, 65,610 horse, 21,870 chariots, 21,870 elephants.

अखिल *a. m f n.* Entire, whole. 2 all.

अगति *a. m f n.* Helpless.

अगम *s. m.* A tree.

अगाध *a. m f n.* Bottomless, very deep, unfathomable. —ता *s. f.* Bottomlessness, depth.

अग्नि *s. m.* Fire. 2 The god of fire.

अग्निदग्ध *a. m f n.* Burnt with fire.

अग्निमत् *a. m f n.* Maintaining a sacrificial fire.

अग्निशिखा *s. f.* A flame of fire.

अग्निहोत्र *s. n.* The sacred fire.

अग्र *s. n.* The top, the summit.

अग्रतस् *ad.* In front of, before.

अग्रहार *s. m.* An endowment of lands conferred upon Brâhmaṇs.

अग्रे *ad.* Before, in front.

अघशंसिन् *s. m.* An informant of a sinful act.

अङ्क *s. m.* The flank or the part above the hip; the bosom, the heart.

अङ्कुर *s. m.* A sprout, a scion.

अङ्ग *s. n.* A limb of the body. 2 The body.

अङ्गना *s. f.* A woman.

अङ्गुष्ठ *s. m.* The thumb.

अचल *a. m f n.* Not shaking or moving. *s. m.* A mountain.

अचिरात् *ad.* Shortly, in a short time.

अचेतन *a. m f n.* Thoughtless, senseless.

अजगर *s. m.* A large serpent, ( Boa constrictor. )

अजिन *s. n.* A hide used as seat, or dress. 2 Leather.

अज्ञ *a. m f n.* Ignorant.

अज्ञात *a. m f n.* Unknown.

अज्ञातवास *s. m.* The living in disguise.

अज्ञान *s. n.* Ignorance.

अञ्चित *a. m f n.* Worshipped, revered; beautiful.

अञ्जित *a. m f n.* Anointed.

अट् १. प. अटति; epic also आत्मनेपद To go, to walk. परि—To wander about.

अटवी *s. f.* A forest, a thicket.

अण्डज *a. m f n.* Produced from an egg. *s.* A bird.

अतथोचित *a. m f n.* Undeserving, not meriting, worthy of something better.

अतन्द्रित *a. m f n.* Unwearied, indefatigable.

अतस् *ad.* ( = अस्मात् abl. of इदम् ) Thence, therefore अतःपरम् henceforth. अतोन्यथा otherwise, than this.

अति *pre. & ad.* Beyond (in time, place or degree.) Very much, exceedingly.

अतिक्रान्त *a. m f n.* Having transgressed, having surpassed. 2 Passed.

अतिथि *s. m.* A guest, a stranger.

अतिदीर्घ *a. m f n.* Too long.

अतिभार *s. m.* A heavy burden, a burden too heavy for the

bearer.

अतिमात्र *a. m f n.* Beyond measure, exceeding. *ad.* Exceedingly.

अतिसुख *a. m f n.* Exceedingly happy.

अतीत *a. m f n.* Passed, gone-[by.

अतीव *ad.* Very much, exceedingly, excessively.

अतुल *a. m f n.* Without an equal, unparalleled.

अत्यन्त *a. m f n.* Excessive, extraordinary. *ad.* Exceedingly, very.

अत्यर्थ *a. m f n.* Excessive, much. *ad.* Excessively, very.

अत्र *ad.* Here, in this matter. (=अस्मिन् loc. of इदम्).

अत्रि *s. m.* The name of one of the seven primeval sages.

अथ *conj.* An inceptive or transitory particle; now, then, hereafter; and moreover, also. अथच Then, also. अथवा or also, but, but if, for.

अथो *ad.* Then, thereafter.

अदस् *pro. n.* This, that.

अदीन *a. m f n.* Not poor, not miserable.

अदृष्ट *a. m f n.* Unseen, unperceived. *s.* Unseen futurity, destiny.

अदृष्टपूर्व *a. m f n.* Unseen previously.

अद्भुत *a. m f n.* Astonishing, extraordinary, preternatural.

अद्य *ad.* Today, now.

अद्रि *s. m.* A mountain.

अधन *a. m f n.* Having no riches, poor.

अधर *s. m.* The lower lip.

अधस् *ad.* Down, below.

अधिक *a. m f n.* Greater, over and above.

अधिकम् *ad.* Excessively, very.

अधिकार *s. m.* Authority, duty, office.

अधिगत *a. m f n.* Reached, attained.

अधिगम *s. m.* अधिगमन *s. n.* Attainment, acquisition.

अधिप *s. m.* An owner, lord or master. 2 A king, sovereign.

अधिष्ठान *s. n.* Place. 2 Dignity. 3 Government.

अधोधस् *ad.* The reduplication of अधस्—Lower and lower, very much below.

अधोमुख *a. m f n.* Hanging down the head, with down-

cast looks.

अध्यक्ष *s. m.* A superintendent.

अध्याय *s. m.* A section or chapter of a book.

अध्वन् *s. m.* A road, a way.

अनघ *a. m f n.* sinless, innocent. 2 pleasing, handsome.

अनभिज्ञ *a. m f n.* Not aware of, ignorant.

अनर्थ *a. m f n.* Unmeaning, useless.

अनर्ह *a. m f n.* Not worthy, not deserving.

अनवद्य *a. m f n.* Faultless. guiltless.

अनवद्याङ्ग *a. m f n.* Beautiful, handsome.

अनसूयक *a. m f n.* Not reviling, not discontented.

अनागत *a. m f n.* Not come, not yet arrived.

अनागस् *a. m f n.* Free from sin, guiltless, sinless.

अनाथवत् *ad.* Like a person who has no protector.

अनामय *s. n.* Freedom from disease, health.

अनायक *a. m f n.* Having no supporter or protector.

अनार्य *a. m f n.* Not Arian, low, despicable.

अनिन्दित *a. m f n.* Unblamed; pious, virtuous.

अनिर्वर्तिन् *a. m f n.* Not flying from the field of battle, bravely fighting.

अनुकाङ्क्षिन् *a. m f n.* Desirous of obtaining.

अनुगत *a. m f n.* Gone after any one, followed.

अनुचित *a. m f n.* Improper.

अनुज्ञात *a. m f n.* Permitted, dismissed.

अनुत्तम *a. m f n.* Unsurpassed, unequalled, excellent, incomparable

अनुत्सेक *s. m.* Humility, meekness.

अनुप्राप्त *a. m f n.* Arrived, set in.

अनुमत *s. n.* Permission, leave.

अनुयायिन् *a. m f n.* Following.

अनुरक्त *a. m f n.* Devoted to, attached to, fond of.

अनुराग *s. m.* Fondness, attachment.

अनुवादिन् *a. m f n.* Repeating, resembling.

अनुव्रजन *a. m f n.* Following.

अनुव्रत *a. m f n.* Obedient, attached to.

अनुशासन *s. n.* Direction. 2 Ruling.

अनुशिक्षिन् *a. m f n.* Practising.

अनुष्ठित *a. m f n.* Practised,

followed.

अनूढ *a. m f n.* Unmarried.

अनृत *s. n.* Untruth, falsehood.

अनेकशस् *ad.* In considerable numbers, in large quantities.

अन्त *s. m.* A boundary, an end.

अन्तःपुर *s. n.* An inner apartment. 2 A queen's apartment. 3 The inmates of the harem.

अन्तकर *a. m f n.* Making an end, causing death. *s. m.* A destroyer.

अन्तर् *ad.* Among, within; under, underneath. 2 Inwardly.

अन्तर *s. n.* An interstice; Inside, the interior. 2 An occasion, an opportunity. 3 A difference, peculiarity; when second half of a compound it may be translated by ' other, special. '

अन्तरात्मन् *s. m.* The soul, the heart.

अन्तरिक्ष, अन्तरीक्ष *s. n.* The sky, the atmosphere, air.

अन्तरीक्षग *a. m f n.* Passing through the air, *s. m.* A bird.

अन्तर्हित *a. m f n.* Hidden, vanished, concealed.

अन्तिक *s. n.* Vicinity, contiguity.

अन्ध *a. m f n.* Blind.

अन्धकार *s. m.* Darkness, night.

अन्न *s. m.* Food, boiled rice.

अन्नरस *s. m.* Chyle. 2 Excellent flavour or taste of food. Power of cooking excellent food.

अन्य, अन्यद् *pro.* Another, different.

अन्यतम *a. m f n.* One of many.

अन्यत्र *ad.* Elsewhere, in another place, somewhere else.

अन्यथा *ad.* Otherwise, differently.

अन्यदा *ad.* At another time.

अन्योन्य *a.* One another, each other.

अन्वित *a. m f n.* Possessed of, endowed with; surrounded or followed by.

अन्वेषण *s. n.* Inquiry, search.

अन्वेषिन् *a. m f n.* Inquisitive, inquiring into.

अन्वेष्टृ *s. m.* One who seeks for a thing.

अप् *s. f.* [used only in plural.] Water.

अपकर्षण *s. n.* The drawing off.
अपकारता *s. f.* An offence.
अपकृत *s. n.* An offence.
अपकृष्ट *a. m f n.* Drawn off, drawn into bad conduct; removed.
अपक्रान्त *a. m f n.* Passed away.
अपत्य *s. n.* Offspring, male or female.
अपथ्य *a. m f n.* Unsuitable, unhealthy.
अपर *a. m f n.* Another.
अपररात्र *s. m.* The latter half of the night; the end of the night.
अपराङ्मुख *a.* Not turning off one's face, not withdrawing.
अपराजित *a. m f n.* Not vanquished, not overcome.
अपराद्ध *a. m f n.* Offence having been committed.
अपराध *s. m.* Offence, fault.
अपरिक्रम *a. m f n.* Unable to walk about.
अपरिणायक *a. m f n.* Having no guide or leader.
अपरिश्रम *a. m f n.* Not fatigued, untired.
अपरेद्युस् *ad.* Another day, on the following day.
अपसद *s. m.* The offspring of a *Vais'ya* by a woman of a lower class. *a. m f n.* mean, low.
अपहरण *s. n.* The taking away.
अपहृत *a. m f n.* Stolen, taken away.
अपाङ्ग *s. m.* The outer corner of the eye.
अपाप *a. m f n.* Free from sin or guilt, innocent.
अपांपति *s. m.* The ocean. 2 An epithet of VARUNA the deity of the ocean.
अपि *part.* Even, also.
अपिहित *a. m f n.* Covered, concealed.
अपूर्व *a. m f n.* Never seen before, uncommon.
अप्रगृह *a. m f n.* Having no provision of corn. 2 Having no guide.
अप्रज *a. m f n.* Without offspring. 2 Without subjects.
अप्रतिकर्मन् *a. m f n.* Not retaliating or remedying.
अप्रतिम *a. m f n.* Matchless, incomparable.
अप्रतिरूप *a. m f n.* Unequalled, incomparable.
अप्रमेय *a. m f n.* Immeasurable.
अप्राप्तकाल *a. m f n.* Inoppor-

tune, out of season.

अप्सरस् *s. f.* A heavenly nymph.

अबद्ध *a. m f n.* Unrestrained, senseless.

अभय *s. n.* Security; a promise of protection.

अभि *pre.* Towards, to.

अभिकाम *s. m.* Love, fondness.

अभिजन *s. m.* Descent, native country.

अभिप्राय *s. m.* Meaning, intention, object.

अभिभव *s.m.* Victory, disgrace.

अभिभाषिन् *a. m f n.* Addressing.

अभिमुख *a. m f n.* Facing, approaching.

अभिलक्ष्यम् *ind.* Towards the mark.

अभिवादक *a. m f n.* Saluting, going to salute.

अभिव्यक्त *a. m f n.* Distinct clear, apparent.

अभिशाप *s. m.* A curse.

अभिषिक्त *a. m f n.* Appointed to an office by sprinkling with water, anointed.

अभिसूचित *a. m f n.* Indicated.

अभिहत *a. m f n.* Broken down, struck.

अभिहित *a. m f n.* Addressed, spoken to.

अभीक्ष्णम् *ad.* Repeatedly, again and again.

अभीप्सु *a. m f n.* Desirous, wishing to obtain.

अभीष्ट *a. m f n.* Beloved, desired, longed for.

अभ्यधिक *a. m f n.* Much more, greater; superior, higher.

अभ्यर्चन *s. n.* Worship.

अभ्यागत *a. m f n.* Come, approached.

अभ्याश *s.m.* Vicinity, nearness.

अभ्युत्थित *a. m f n.* Risen up.

अभ्र *s. n.* The sky or atmosphere. 2 A cloud.

अमर *a. m f n.* Immortal *s. m.* A god.

अमरप्रभ *a. m f n.* Having the lustre of a deity.

अमरवत् *ad.* God-like.

अमरोत्तम *a. m f n.* The best of gods.

अमरोपम *a. m f n.* God-like.

अमर्षण *a. m f n.* Passionate, wrathful.

अमात्य *s. m.* A minister, an adviser.

अमार्जित *a. m f n.* Not cleansed, not rubbed off.

अमित्र *s. m.* An enemy.

अमृत *s. n.* The drink of the gods, nectar.

अमेय *a. m f n.* Immeasurable.

अम्बु s. n. Water.
अम्भस् s. n. Water.
अयुत s. n. Ten thousand.
अयोध्या s. f. The capital of king RITUPARNA.
अरजस् a. m/f n. Free from dust.
अरण्य s. n. A wood, a forest.
अराल a. m f n. Crooked, bent.
अरि s. m. An enemy.
अरिंदम a. m f n. Subduing his enemies, victorious.
अरिहन् s. m. A destroyer of ones enemies.
अरुण a. m f n. Red, tawny.
अर्च् १. १०. प. अर्चति; अर्चयति. To worship, to honour, to treat with respect.
अर्ज् १०. प. अर्जयति. To earn, to gain, to acquire.
उप–Idem.
अर्जित a. m f n. Acquired, procured, collected.
अर्णव s. m. The sea.
अर्थ १०. उ. अर्थयति, अर्थयते. To ask, to beg.
प्र–to supplicate, to entreat. 2 To ask or solicit for.
अर्थ s. m. Object, end. 2 Meaning, sense. 3 Cause, reason. 4 Wealth. 5 Business. अर्थम् in comp. means on account of, for the sake of, e. g. पानीयार्थम् for the sake of water.
अर्थकाम a. m. f n. Desirous of wealth.
अर्थकृच्छ्र s. n. A difficulty.
अर्थितव्य a. m f n. Fit to be sought.
अर्थिन् a. m f n. Having accomplished (his) end or object. 2 Desirous of. 3 s. m f. A mendicant, beggar.
अर्थे ad. For, on account of, on behalf of, for the sake of.
अर्दित a. m f n. Vexed with pain, tormented.
अर्ध a. m f n. Half. s. n. One half.
अर्धचन्द्र s. m. A half moon, a crescent. अर्धचन्द्रं-दा to take by the neck.
अर्धरात्र s. m. Midnight.
अर्ह्, १. प. अर्हति. To be fit or worthy. [respect.
अर्हण s. n. Veneration, worship,
अलक्षित a. m f n. Unobserved, unseen.
अलंकार s. m. Ornament.
अलंकृत a. m f n. Adorned, decorated, ornamented.
अलङ्घनीय a. m f n. Not to be transgressed or violated.–ता f. Inviolability.
अल्पकार्य a. m f n. Of little im-

portance, trifling.

अव *pre.* From, down from.

अवकर *s. m.* Dust, the sweepings of a house.

अवकर्त *s. m.* A piece cut off.

अवकर्तन *s. n.* The act of cutting of.

अवकीर्ण *a. m f n.* Scattered.

अवकृष्ट *a. m f n.* Drawn off, pulled away.

अवधूत *a. m f n.* Shaken off.

अवनत *a. m f n.* Bowed, bent down.

अवन्ती *s. f.* The name of a city, the modern Ujjayini.

अवमत *a. m f n.* Despised.

अवलम्बन *s. n.* Supporting.

अवलिप्त *a. m f n.* Besmeared. 2 Vain, conceited.

अवशिष्ट *a. m f n.* Remaining, left behind.

अवश्यम् *ad.* Certainly, necessarily.

अवसिक्त *a. m f n.* Sprinkled, made wet.

अवस्त्रता *s. f.* The state of being without clothes.

अवस्था *s. f.* State, condition.

अवस्थित *a. m f n.* Standing, staying. 2 Waiting.

अवहित *a. m f n.* Attentive.

अवाप्ति *s. f.* Attainment.

अविज्ञात *a. m f n.* Unknown, unperceived.

अविशङ्क *a. m f n.* Having no suspicion, fear or doubt.

अवेक्षित *a. m f n.* Inspected.

अव्यक्त *a. m f n.* Indistinct, obscure.

अव्यग्र *a. m f n.* Not disturbed, peaceable.

अव्यय *a. m f n.* Not to be changed; unceasing, everlasting, continual.

अश् ५. आ. अश्नुते To obtain, to reach ९. प. अश्नाति To eat. प्र—To bigin to eat.

अशक्त *a. m f n.* Unable, infirm, weak.

अशङ्कित *a. m f n.* Fearless, not alarmed.

अशन *s. n.* The act of eating, a meal, food.

अशुभ *a. m f n.* Vicious, wicked, evil.

अशेषतस् *ad.* Entirely, wholly.

अशेषेण *ad.* Entirely.

अशोक *s. m.* The name of a tree.

अश्रु *s. n.* A tear.

अश्व *s. m.* A horse.

अश्वमेध *s. m.* The horse-sacrifice.

अश्वशाला *s. f.* A stable for horses.

अश्वहृदय *s. n.* Knowledge of horses, horsemanship.

अश्विनौ *s. dual* (श्विन् *m*) The twin sons of the nymph As'VINI by Surya & physicians of the gods.

अष्टन् *num.* Eight.

अष्टम *a. m f n.* The eighth.

अष्टादशन् *num.* Eighteen.

अस् २.प. अस्ति, To be, to exist ४. उ. अस्यति–ते. To throw, to direct.

अप—To draw off.

अभि–To execrate.

निस्–To throw off, to destroy.

विनि–To place. 2 To receive.

असंवीत *a. m f n.* Uncovered, unclothed.

असंशयम् *ad.* Undoubtedly.

असंस्कृत *a. m f n.* Unpolished, not inaugurated; not cleaned.

असकृत् *ad.* More than once, repeatedly.

असंख्येय *a. m f n.* Innumerable, incalculable.

असत्कृत *a. s. n.* A bad action, a crime.

असत्य *s. n.* Untruth.

असहाय *a. m. f n.* Without a helper, without an assistant.

असि *s. m.* A sword.

असित *a. m. f n.* Not white, black.

असिधाराव्रत *s. n.* The vow to lie on the edge of a sword *i.e.* an exceedingly difficult performance.

असु *denom.* प. असूयति. To be discontented with.

असुख *a. m f n.* Unhappy. *s n.* Vexation, grief, misery.

असौ *pron. m f.* [nom. sing of अदस्.] He, she.

अस्त *s. m.* The western mountain, that behind which the heavenly luminaries appear to set. 2 The setting of any heavenly lumminary.

अस्त्र *s. n.* An arrow, any weapon that is thrown.

अस्मद् Base of the plural of the pron. of the first person in the oblique cases.

अस्वस्थ *a. m f n.* Dependent, feeble, infirm. 2 Uneasy, uncomposed.

अहन् *s. n.* A day.

अहम् *pro.* ( nom. sing. of अस्मद् ) I.

अहो *interj.* A particle expressive of praise or surprise, joy, sadness or blame. Oh! Ah!

अहोरात्र *s. m.* A day of twenty-four hours from sun-

rise to sun-rise.

## आ

आगत *a. m f n.* Arrived, come.

आकारवत् *a. m f n.* Well shaped.

आकाश *s. m n.* The sky; the atmosphere.

आकीर्ण *a. m f n.* Overspread.

आकुल *a. m f n.* Confounded, perplexed; filled, full.

आकृति *s. f.* The shape or figure of a thing; an image, likeness.

आकौशल *s. n.* Inexpertness, want of skill.

आक्रान्त *a. m f n.* Overcome, overpowered.

आखु *s. m.* A rat, a mouse.

आख्यान *s. m.* A tale, a legend. 2 History.

आख्येय *a. m f n.* Worthy of being related.

आगम *s. m.* Arrival, coming.

आगमन *s. n.* The coming, arrival.

आगस् *s. n.* Sin, transgression.

आचरित *a. m f n.* Attended to, or observed as a habit.

आचार *s. m.* Usage, custom, rule of conduct.

आज्ञा *s. f.* A command, an order.

आज्ञात *a. m f n.* Ordered, commanded.

आडम्बर *s. m.* A loud sound; great pomp.

आढ्य *a. m f n.* Opulent, rich. Used in comp. e. g. पुष्पाढ्य rich in flowers.

आतप *s. m.* Sunshine, heat produced by the sun.

आतुर *a. m f n.* Sick. 2 Incapable.

आत्मजा *s. f.* A daughter.

आत्मन् *s. m.* Soul. 2 The self, individuality, one's self. 3. The Understanding.

आत्मप्रभ *a. m f n.* Brilliant through its own lustre.

आत्मभव *s. m.* One's own manifestation or presence. 2 *a. m f n.* Caused by one's self.

आदर *s. m.* Respect, honour.

आदित्य *s. m.* A son of Aditi, pl. a class of 12 deities. 2 The Sun. 3 A deity in general.

आदिष्ट *a. m f n.* Ordered, commanded.

आद्य *a. m f n.* The first.

आधि *s. m.* Sorrow, anxiety.

आनन *s. n.* The face, the mouth.

आनन्द *s. m.* Happiness, joy.

आनयन *s. n.* The bringing, or fetching near.

आनीत *a. m f n.* Brought, fetched.

आप ५. आप्नोति. To attain, to obtain, to suffer. १०. उ. आपयति—ते. To pervade or occupy.

अव—To obtain.

प्र—to attain, to fall into, to arrive, to enter.

संप्र—To meet.

अनुसंप्र—To happen.

आपगा *s. f.* A river, a stream.

आपद् *s. f.* Distress, calamity, misfortune.

आपन्न *a. m f n.* Possessed of approached; gained, acquired.

आपीड *s. m.* A chaplet worn on the crown of the head.

आप्त *a. m f n.* Trusted, confidential.

आप्तकारिन् *a. m f n.* A trusty agent, a confidential servant.

आप्तदक्षिण *a. m f n.* Of ample gifts or presents; e g. आप्तदक्षिण यज्ञ a sacrifice at which ample presents are made to Brâhmaṇs.

अप्यायित *a. m f n.* Pleased, gratified; refreshed.

आप्लुत *a. m f n.* Bathed. 2 Overflowed.

आभरण *s. n.* Ornament.

आभा *s. f.* Splendour, appearance.

आमलक *s. m n.* A plant, the myrobalan. 2 *n.* Its fruit.

आम्र *s. m.* A mango tree.

आम्रवण *s. n.* A forest of mango trees.

आयत *a. m f n.* Extended, long.

आयास *s. m.* Exertion, fatigue.

आयुष्मत् *a. m f n.* Long-lived.

आरब्ध *a. m f n.* Begun; undertaken. 2 Beginning, commencing.

आरम्भ *s. m.* A beginning; an enterprise.

आराधन *s. n.* Worshipping, propitiating.

आराध्य *a. m f n.* To be propitiated, to be pleased.

आरोह *s. m.* The hip.

आर्जव *s. n.* Candour, honesty; straightness.

आर्त्त *a. m f n.* Afflicted, vexed.

आर्य *a. m f n.* Noble, of a good family.

आलय *s. m.* A house, a dwelling.

आलाप *s. m.* Discourse, conversation.

आलोकन *s. n.* Looking at, seeing.

आवलि, आवली *s. f.* A row, a range.

आविल *a. m f n.* Foul, turbid.

आविष्ट *a. m f n.* Possessed, engrossed ( by any sentiment or thought ).

आवृत *a. m f n.* Surrounded; covered, concealed.

आशा *s. f.* Desire, hope, expectation.

आशीर्वाद *s. m.* A benediction.

आशीविष *s. m.* A serpent, a poisonous snake.

आशु *ad.* Swiftly, quickly.

आश्चर्य *s. n.* Wonder, miracle.

आश्रम *s. m.* A hermitage, the abode of a recluse in a forest.

आश्रमपद *s. n.* A hermitage.

आश्रममण्डल *s.n.* A hermitage.

आश्रय *s. m.* An asylum; shelter. 2 A house.

आस् २. आ. आस्ते. To sit, to exist. 2 To sit near or in attendance on ( any one. ) 3 To worship, to pray. 4. To remain in a state, to be उप. पर्युप To wait upon a person also. १ प. epic. 2 To perform.

आसन *s. n.* A seat.

आसादित *a. m f n.* Gained, acquired. 2 Reached.

आसीन *a. m f n.* Sitting, being seated.

आसुर *a. m f n.* Demoniacal; relating; belonging to the *Asuras* or the enemies of Gods.

आस्थित *a. m f n.* Placed. 2 Reached; obtained.

आस्य *s. n.* The face, the mouth.

आह, आहतुः, आहुः, आत्थ, आहथुः he says &c. substitutes for. ब्रू; प्रति— he answers.

आहर्तृ *s. m.* The performer of a sacrifice.

आहार *s. m.* A meal, food, eating.

आहिताग्नि *s. m.* A Brâhman who keeps a sacred fire.

आहोस्वित् *interj.* Or, perhaps.

आल्हाद *s. m.* Joy, delight.

## इ.

इ १ प. अयति. २ प. एति. To go, to fall into.

अधि-२.आ To study, to learn.

अनु-To follow.

अभि-To come near, to approach.

अव—To comprehend, to understand —To approach.

आ-To come.

अभ्या—To approve.

समा—To meet.

उप—To approach.

पला-पलायते To flee.

सम्—To meet, to assemble.

इक्ष्वाकु s. m. The name of the first monarch of Ayodhyâ in the Solar line commencing with the second Yuga.

इच्छु a. m f n. Desirous, wishing for, eager.

इतर pro. Another, a different one. 2 Low, vile, inferior.

इतश्चेतश्च ad. Here and there.

इतस् ad. (abl. of इदम्.) Hence; hereafter, from this.

इतस्ततस् ad. Here and there, Hither and thither.

इति inde. Thus, in this manner, so. 2 It is used to denote the conclusion of a speech.

इतीव ad. To this effect.

इत्थम् ad. Thus, so, in this manner.

इदम् pro. n. This.

इदानीम् ad. Now.

इन्द्र s. m. The deity presiding over *swarga*. 2 In *Tatpurusha* compounds a king, a chief, a lord the first or best of his kind; as मनुजेन्द्र a king or lord of men.

इन्द्रसेन s. m. The name of the son of king Nala.

इन्द्रसेना s. f. The name of the daughter of king Nala.

इन्द्रिय s. n. An organ of sense or action.

इन्धन s. n. Fuel, wood.

इव ad. Like, as, as it were, even as. 2 Almost.

इष् ६. प. इच्छति. To wish, to desire, to long for. ४. प. इष्यति. To go.

अनु-अन्विष्यति, sometimes also अन्वेषयति 10th conj. To seek after or for, to enquire, to search; प्र or सं प्र —to send, to despatch.

इषु s. m. An arrow. [an arrow.

इषुमत् a. m f n. Possessed of

इष्ट a. m f n. Wished for, desired, desirable.

इह ad. (loc. of इदम्) Here, in this place.

## ई

ईक्ष् १ आ. ईक्षते. in epic poetry also परस्मैपदी. To look, to see, to behold.

अव—To look at; to pay attention to, to regard.

उप—To look at, to pay regard to. 2. To overlook.

प्र—To behold.

प्रति—To expect, to wait for

वि—or अभिवि-To see.

सम्--to look to, to pay attention to.

प्रसम्–To behold, to perceive to consider.

ईक्षण *s. n.* The eye ; sight.

ईदृश ईदृश *a. m f n.* Such, this like.

ईप्सित *a. m f n.* Wished for, desired, beloved.

ईरित *a. m f n.* Despatched, thrown. 2 Uttered, pronounced, spoken.

ईश *s. m.* A ruler, a lord or master.

ईश्वर *s. m.* A master, a lord. 2 God, the ruler of the world.

## उ.

उक्त *a. m f n.* Spoken, said, uttered ; mentioned.

उग्र *a. m f n.* Passionate, wrathful, exceedingly strong, or great, terrible.

उचित *a. m. f n.* Proper, fit, suitable. 2 Used, accustomed to. 3 Clever, skilful.

उच्चैस् *ad.* Aloud, with a loud voice.

उच्छिष्ट *a. m f n.* Left behind, remaining (as food after a meal.) *s. n.* Leavings-ता. The state of being leavings.

उच्छ्रित *a. m f n.* Elevated, high.

उत *inde.* Also, and, or. It is often redundant.

उताहु,उताहो *inter.* Part. of interrogation, inquiry or of doubt.

उताहोस्वित् *inde.* Whether, or perhaps.

उत्कट *a. m f n.* Excessive. 2 intoxicated, mad, furious.

उत्कण्ठित *a. m f n.* Full of longing.

उत्तम *a. m f n.* Supreme, excellent, best, chief.

उत्तर *a. m f n.* Northern. *s. n.* A reply, an answer.

उत्तरीय *s. n.* An outer garment.

उत्थित *a. m f n.* Arisen, exalted.

उत्सर्ग *s. m.* Abandoning.

उत्सव *s. m.* A festival.

उत्साह *s. m.* Zeal, energy, ardour.

उत्सुक *a. m f n.* Longing for, anxious for, striving for an object.

उत्सृष्ट *a. m f n.* Abandoned, forsaken.

उत्सेक *s. m.* Pride, haughtiness.

उत्सेध *s. m.* Height, elevation.

उद् *pre.* Up, upwards, high in place, rank or degree.

